निहत्य तां यक्षसुतां स रामः
प्रशस्यमानः सुरसिद्धसंघैः ।
उवास तस्मिन्मुनिना सहैव
प्रभातवेलां प्रतिबोध्यमानः ॥ ३६ ॥

इति षड्त्रिंशः सर्गः ॥

## सप्तत्रिंशः सर्गः ॥



अथ तां रजनीमुष्य विश्वामित्रो महायशाः ।
प्रहस्य राघवं वाक्यमुवाच मधुराक्षरम् ॥

परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥

देवासुरगणान्वापि सगन्धर्वोरगानपि ।
यैरमित्रान्प्रसह्याजौ वशीकृत्य जयिष्यसि ॥

तानि दिव्यानि भद्रं ते ददाम्यस्त्राणि सर्वशः ।
दण्डचक्रं महद्दिव्यं तव दास्यामि राघव ॥

धर्मचक्रं ततो वीर कालचक्रं तथैव च ।
विष्णुचक्रं तथात्युग्रमैन्द्रमस्त्रं तथैव च ॥

वज्रमस्त्रं नरश्रेष्ठ शैवं शूलवरं तथा ।
अस्त्रं ब्रह्मशिरश्चैव ऐषीकमपि राघव ॥

ददामि ते महाबाहो ब्राह्ममस्त्रमनुत्तमम् ।
गदे द्वे चैव काकुत्स्थ मोदकी शिखरी उभे ॥

प्रदीप्ते नरशार्दूल प्रयच्छामि नृपात्मज ।
धर्मपाशमहं राम कालपाशं तथैव च ॥ ८ ॥

पाशं वारुणमस्त्रं च ददाम्यहमनुत्तमम् ।
अशनी द्वे प्रयच्छामि शुष्कार्द्रे रघुनन्दन ॥

ददामि चास्त्रं पैनाकमस्त्रं नारायणं तथा ।
आग्नेयमस्त्रं दयितं शिखरं नाम नामतः ॥

वायव्यं प्रथमं नाम ददामि च तवानघ ।
अस्त्रं हयशिरो नाम क्रौञ्चमस्त्रं तथैव च ॥

शक्तिद्वयं च काकुत्स्थ ददामि तव राघव ।
कङ्कालं मुसलं घोरं कपालमथ कङ्कणम् ॥

धारयन्त्यसुरा यानि ददाम्येतानि सर्वशः ।
वैद्याधरं महास्त्रं च नन्दनं नाम नामतः ॥

असिरत्नं महाबाहो ददामि नृपवरात्मज ।
गान्धर्वमस्त्रं दयितं मानवं नाम नामतः ॥

प्रस्वापनप्रशमने दद्मि सौरं च राघव ।
दर्पणं शोषणं चैव संतापनविलापने ॥ १५ ॥

मदनं चैव दुर्धर्षं कंदर्पदयितं तथा ।
पैशाचमस्त्रं दयितं मोहनं नाम नामतः ॥

प्रतीच्छ नरशार्दूल राजपुत्र महायशः ।
तामसं नरशार्दूल सौमनं च महाबल ॥ १७ ॥

संवर्तं चैव दुर्धर्षं मौसलं च नृपात्मज ।
सत्यमस्त्रं महाबाहो तथा मायाधरं परम् ॥

घोरं तेजःप्रभं नाम परतेजोपकर्षणम् ।
सौम्यास्त्रं शिशिरं नाम त्वाष्ट्रमस्त्रं सुदामनम् ॥

दारुणं च भगस्यापि शीतेषुमथ मानवम् ।
एतान्राम महाबाहो कामरूपान्महाबलान् ॥

गृह्लाण परमोदारान्क्षिप्रमेव नृपात्मज ।
स्थितस्तु प्राङ्मुखो भूत्वा शुचिर्मुनिवरस्तदा ॥

ददौ रामाय सुप्रीतो मन्त्रग्राममनुत्तमम् ।
सर्वसंग्रहणं येषां दैवतैरपि दुर्लभम् ॥ २२ ॥

तान्यस्त्राणि तदा विप्रो राघवाय न्यवेदयत् ।
जपतस्तु मुनेस्तस्य विश्वामित्रस्य धीमतः ॥

उपतस्थुर्महार्हाणि सर्वाण्यस्त्राणि राघवम् ।
ऊचुश्च मुदिताः सर्वे रामं प्राञ्जलयस्तदा ॥

इमे स्म परमोदाराः किंकरास्तव राघव ।
प्रतिगृह्य च काकुत्स्थः समालभ्य च पाणिना ।
मानसा मे भविष्यध्वमिति तानभ्यचोदयत् ॥

ततः प्रीतमना रामो विश्वामित्र महामुनिम् ।
अभिवाद्य महातेजा गमनायोपचक्रमे ॥ २६ ॥

इति सप्तविंशः सर्गः ॥

## अष्टाविंशः सर्गः ॥

प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनः शुचिः ।
गच्छन्नेव च काकुत्स्थो विश्वामित्रमथाब्रवीत ॥

गृहीतास्त्रोऽस्मि भगवन्दुराधर्षः सुरासुरैः ।
अस्त्राणां त्वहमिच्छामि संहारं मुनिपुंगव ॥

एवं ब्रुवति काकुत्स्थे विश्वामित्रो महामतिः ।
संहारं व्याजहाराथ धृतिमान्सुव्रतः शुचिः ॥

सत्यवन्तं सत्यकीर्तिं धृष्टं रभसमेव च ।
प्रतिहारतरं नाम पराङ्मुखमवाङ्मुखम् ॥ ४ ॥

लक्ष्याक्षविषमौ चैव दृढनाभसुनाभकौ ।
दशाक्षशतवक्त्रौ च दशशीर्षशतोदरौ ॥ ५ ॥

पद्मनाभमहानाभौ दुन्दुनाभसुनाभकौ ।
ज्योतिषं कृशनं चैव नैराश्यविमलावुभौ ॥ ६ ॥

योगन्धरहरिद्रौ च दैत्यप्रमथनं तथा ।
शुचिर्बाहुर्महाबाहुर्निष्कुलिर्विरुचिस्तथा ॥ ७ ॥

सार्चिर्माली धृतिर्माली वृत्तिमान्रुचिरस्तथा ।
पित्र्यं सौमनसं चैव विधूतमकरावुभौ ॥ ८ ॥

करवीरकरं चैव धनधान्यौ च राघव ।
कामरूपं कामरुचिं मोहमावरणं तथा ॥ ९ ॥

जृम्भकं सर्वनाभं च संतानवरणौ तथा ।
भृशाश्वतनयान्राम भास्वरान्कामरूपिणः ॥ १० ॥

प्रतीच्छ मम भद्रं ते पात्रभूतोऽसि राघव ।
बाढमित्येव काकुत्स्थः प्रहृष्टेनान्तरात्मना ॥ ११ ॥

दिव्यभास्वरदेहाश्च मूर्तिमन्तः सुखप्रदाः ।
केचिदङ्गारसदृशाः केचिद्धूमोपमास्तथा ॥ १२ ॥

चन्द्रार्कसदृशाः केचित्प्रह्वाञ्जलिपुटास्तथा ।
रामं प्राञ्जलयो भूत्वाब्रुवन्मधुरभाषिणः ॥ १३ ॥

इमे स्म नरशार्दूल शाधि किं करवाम ते ।
मानसाः कार्यकालेषु साहाय्यं मे करिष्यथ ॥

गम्यतामिति तानाह यथेष्टं रघुनन्दनः ।
अथ ते राममामन्त्र्य कृत्वा चापि प्रदक्षिणम् ॥

एवमस्त्विति काकुत्स्थमुक्त्वा जग्मुर्यथागतम् ।
स च तान्राघवो ज्ञात्वा विश्वामित्रं महामुनिम् ॥

गच्छन्नेवाथ मधुरं श्लक्ष्णं वचनमब्रवीत् ।
किं न्वेतन्मेघसंकाशं पर्वतस्याविदूरतः ॥ १७ ॥

वृक्षषण्डमितो भाति परं कौतूहलं हि मे ।
दर्शनीयं मृगाकीर्णं मनोहरमतीव च ॥ १८ ॥

नानाप्रकारैः शकुनैर्वल्गुनादैरलंकृतम् ।
निःसृताः स्म मुनिश्रेष्ठ कान्ताराद्रोमहर्षणात् ॥

अनया त्ववगच्छामि देशस्य सुखवत्तया ।
सर्वं मे शंस भगवन्कस्याश्रमपदं त्विदम् ॥ २० ॥

संप्राप्ता यत्र ते पापा ब्रह्मघ्ना दुष्टचारिणः ।
तव यज्ञस्य विघ्नाय दुरात्मानो महामुने ॥ २१ ॥

भगवंस्तस्य को देशः सा यत्र तव याज्ञिकी ।
रक्षितव्या क्रिया ब्रह्मन्मया वध्याश्च राक्षसाः ।
एतत्सर्वं मुनिश्रेष्ठ श्रोतुमिच्छाम्यहं प्रभो ॥ २२ ॥

इति अष्टाविंशः सर्गः ॥

## एकोनत्रिंशः सर्गः ॥

अथ तस्याप्रमेयस्य तद्वनं परिपृच्छतः ।
विश्वामित्रो महातेजा व्याख्यातुमुपचक्रमे ॥ १ ॥

इह राम महाबाहो विष्णुर्देववरः प्रभुः ।
वर्षाणि सुबहून्येव तथा युगशतानि च ॥ २ ॥

तपश्चरणयोगार्थमुवास सुमहातपाः ।
एष पूर्वाश्रमो राम वामनस्य महात्मनः ॥ ३ ॥

सिद्धाश्रम इति ख्यातः सिद्धो ह्यत्र महातपाः ।
एतस्मिन्नेव काले तु राजा वैरोचनिर्बलिः ॥ ४ ॥

निर्जित्य दैवतगणान्सेन्द्रांश्च समरुद्गणान् ।
कारयामास तद्राज्यं त्रिषु लोकेषु विश्रुतः ॥ ५ ॥

बलेस्तु यजमानस्य देवाः साग्निपुरोगमाः ।
समागम्य स्वयं चैव विष्णुमूचुरिहाश्रमे ॥ ६ ॥

बलिर्वैरोचनिर्विष्णो यजते यज्ञमुत्तमम् ।
असमाप्ते क्रतौ तस्मिन्स्वकार्यमभिपद्यताम् ॥ ७ ॥

ये चैनमभिवर्तन्ते याचितार इतस्ततः ।
यच्च यत्र यथावच्च सर्वं तेभ्यः प्रयच्छति ॥

स त्वं सुरहितार्थाय मायायोगमुपाश्रितः ।
वामनत्वं गतो विष्णो कुरु कल्याणमुत्तमम् ॥

एतस्मिन्नन्तरे राम काश्यपोऽग्निसमप्रभः ।
अदित्या सहितो राम दीप्यमान इवौजसा ॥

देवीसहायो भगवान्दिव्यं वर्षसहस्रकम् ।
व्रतं समाप्य वरदं तुष्टाव मधुसूदनम् ॥ ११ ॥

तपोमयं तपोराशिं तपोमूर्तिं तपात्मकम् ।
तपसा त्वां सुतप्तेन पश्यामि पुरुषोत्तमम् ॥

शरीरे तव पश्यामि जगत्सर्वमिदं प्रभो ।
त्वमनादिरनिर्देश्यस्त्वामहं शरणं गतः ॥

तमुवाच हरिः प्रीतः काश्यपं धूतकल्मषम् ।
वरं वरय भद्रं ते वरार्होऽसि मतो मम ॥

तच्छ्रुत्वा वचनं तस्य मारीचः काश्यपोऽब्रवीत् ।
अदित्या देवतानां च मम चैवानुयाचतः ॥

वरं वरद सुप्रीतो दातुमर्हसि सुव्रत ।
पुत्रत्वं गच्छ भगवन्नदित्या मम चानघ ॥

भ्राता भव यवीयांस्त्वं शक्रस्यासुरसूदन ।
शोकार्तानां तु देवानां साहाय्यं कर्तुमर्हसि ॥

अयं सिद्धाश्रमो नाम प्रसादात्ते भविष्यति ।
सिद्धे कर्मणि देवेश उत्तिष्ठ भगवन्नितः ॥

अथ विष्णुर्महातेजा अदित्यां समजायत ।
वामनं रूपमास्थाय वैरोचनिमुपागमत् ॥ १९ ॥

त्रीन्क्रमानथ भिक्षित्वा प्रतिगृह्य च मानदः ।
आक्रम्य लोकाँल्लोकात्मा सर्वलोकहिते रतः ॥

महेन्द्राय पुनः प्रादान्नियम्य बलिमोजसा ।
त्रैलोक्यं स महातेजाश्चक्रे शक्रवशं पुनः ॥ २१ ॥

तेनैष पूर्वमाक्रान्त आश्रमः श्रमनाशनः ।
मयापि भक्त्या तस्यैव वामनस्योपभुज्यते ॥२२॥

एतमाश्रममायान्ति राक्षसा विघ्नकारिणः ।
अत्र गच्छामहे राम सिद्धाश्रममनुत्तमम् ॥

तदाश्रमपदं तात तवाप्येतद्यथा मम ।
प्रविशन्नाश्रमपदं व्यरोचत महामुनिः ॥ २४ ॥

शशीव गतनीहारः पुनर्वसुसमन्वितः ।
तं दृष्ट्वा मुनयः सर्वे सिद्धाश्रमनिवासिनः ॥ २५ ॥

उत्पत्योत्पत्य सहसा विश्वामित्रमपूजयन् ।
यथार्हं चक्रिरे पूजां विश्वामित्राय धीमते ॥ २६ ॥

तथैव राजपुत्राभ्यामकुर्वन्नतिथिक्रियाम् ।
मुहूर्तमिव विश्रान्तौ राजपुत्रावरिंदमौ ॥ २७ ॥

प्राञ्जली मुनिशार्दूलमूचतू रघुनन्दनौ ।
अद्यैव दीक्षां प्रविश भद्रं ते मुनिपुंगव ॥

सिद्धाश्रमोऽयं सिद्धः स्यात्सत्यमस्तु वचस्तव ।
एवमुक्तो महातेजा विश्वामित्रो महानृषिः ॥

प्रविवेश ततो दीक्षां नियतो नियतेन्द्रियः ।
कुमारावपि तां रात्रिमुषित्वा सुसमाहितौ ॥

प्रभातकाले चोत्थाय पूर्वां संध्यामुपास्य च ।
स्पृष्टोदकौ शुची जप्यं समाप्य नियमेन च ॥

हुताग्निहोत्रमासीनं विश्वामित्रमवन्दताम् ॥ ३१ ॥

इति एकोनत्रिंशः सर्गः ॥



## त्रिंशः सर्गः



अथ तौ देशकालज्ञौ राजपुत्रावरिंदमौ ।
देशे काले च वाक्यज्ञावब्रूतां कौशिकं वचः ॥

भगवञ्श्रोतुमिच्छावो यस्मिन्काले निशाचरौ ।
संरक्षणीयौ तौ ब्रह्मन्नातिवर्तेत तत्क्षणम् ॥ २ ॥

एवं ब्रुवाणौ काकुत्स्थौ त्वरमाणौ युयुत्सया ।
सर्वे ते मुनयः प्रीताः प्रशशंसुर्नृपात्मजौ ॥ ३ ॥

अद्य प्रभृति षड्रात्रं रक्षतं राघवौ युवाम् ।
दीक्षां गतो ह्येष मुनिर्मौनित्वं च गमिष्यति ॥ ४ ॥

तौ च तद्वचनं श्रुत्वा राजपुत्रौ यशस्विनौ ।
अनिद्रौ षडहोरात्रं तपोवनमरक्षताम् ॥ ५ ॥

उपासांचक्रतुर्वीरौ यत्तौ परमधन्विनौ ।
ररक्षतुर्मुनिवरं विश्वामित्रमरिंदमौ ॥ ६ ॥

अथ काले गते तस्मिन्षष्ठेऽहनि समागते ।
सौमित्रिमब्रवीद्रामो यत्तो भव समाहितः ॥

रामस्यैवं ब्रुवाणस्य त्वरितस्य युयुत्सया ।
प्रजज्वाल ततो वेदिः सोपाध्यायपुरोहिता ॥८॥

सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया ।
विश्वामित्रेण सहिता वेदिर्जज्वाल सर्त्विजा ॥९॥

मन्त्रवच्च यथान्यायं यज्ञोऽसौ संप्रवर्तते ।
आकाशे च महाञ्छब्दः प्रादुरासीद्भयानकः ॥

आवार्य गगनं मेघो यथा प्रावृषि निर्गतः ।
तथा मायां विकुर्वाणौ राक्षसावभ्यधावताम् ॥

मारीचश्च सुबाहुश्च तयोरनुचराश्च ये ।
आगम्य भीमसंकाशा रुधिरौघमवासृजन् । १२ ॥

न तेन रुधिरौघेण वेदिं तामभ्यवर्षताम् ।
दृष्ट्वा वेदिं तथाभूतां सानुजः क्रोधसंयुतः ॥१३॥

सहसाभिद्रुतो रामस्तावपश्यत्ततो दिवि ।
तावापतन्तौ सहसा दृष्ट्वा राजीवलोचनः ॥१४॥

लक्ष्मणं त्वथ संप्रेक्ष्य रामो वचनमब्रवीत् ।
पश्य लक्ष्मण दुर्वृत्तान्राक्षसान्पिशिताशनान् ॥

मानवास्त्रसमाधूताननिलेन यथा घनान् ।
मानवं परमोदारमस्त्रं परमभास्वरम् ॥ १६ ॥

चिक्षेप परमक्रुद्धो मारीचोरसि राघवः ।
स तेन परमास्त्रेण मानवेन समाहितः ॥ १७ ॥

संपूर्णं योजनशतं क्षिप्तः सागरसंप्लवे ।
विचेतनं विघूर्णन्तं शीतेषुबलपीडितम् ॥ १८ ॥

निरस्तं दृश्य मारीचं रामो लक्ष्मणमब्रवीत् ।
पश्य लक्ष्मण शीतेषुं मानवं धर्मसंहितम् ॥१९॥

मोहयित्वा नयत्येनं न च प्राणैर्वियुज्यते ।
इमानपि वधिष्यामि निर्घृणान्दुष्टचारिणः ॥२०॥

राक्षसान्पापकर्मस्थान्यज्ञघ्नान्पिशिताशनान् ।
प्रगृह्यास्त्रं ततो रामो दिव्यमाग्नेयमुत्तमम् ॥ २१ ॥

सुबाहूरसि चिक्षेप स विद्धः प्रापतद्भुवि ।
शेषान्वायव्यमादाय निजघान महायशाः ॥ २२॥

राघवः परमोदारो मुनीनां मुदमावहन् ।
स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः ॥ २३ ॥

ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ।
अथ यज्ञे समाप्ते तु विश्वामित्रो महामुनिः ॥

निरीतिका दिशो दृष्ट्वा काकुत्स्थमिदमब्रवीत् ।
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ।
सिद्धाश्रममिदं सत्यं कृतं राम महायशाः ॥ २५ ॥

इति त्रिंशः सर्गः ॥



## एकत्रिंशः सर्गः ॥

अथ तां रजनीं तत्र कृतार्थौ रामलक्ष्मणौ ।
ऊषतुर्मुदितौ वीरौ प्रहृष्टेनान्तरात्मना ॥ १ ॥

प्रभातायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियौ ।
विश्वामित्रमृषींश्चान्यान्सहितावभिजग्मतुः ॥ २ ॥

अभिवाद्य मुनिश्रेष्ठं ज्वलन्तमिव पावकम् ।
ऊचतुर्मधुरोदारं वाक्यं मधुरभाषिणौ ॥ ३ ॥

इमौ स्म मुनिशार्दूल किंकरौ समुपागतौ ।
आज्ञापय यथेष्टं वै शासनं करवाव किम् ॥ ४ ॥

एवमुक्तास्ततस्ताभ्यां सर्व एव महर्षयः ।
विश्वामित्रं पुरस्कृत्य रामं वचनमब्रुवन् ॥ ५ ॥

मैथिलस्य नरश्रेष्ठ जनकस्य भविष्यति ।
यज्ञः परमधर्मिष्ठस्तस्य यास्यामहे वयम् ॥ ६ ॥

त्वं चैव नरशार्दूल सहास्माभिर्गमिष्यसि ।
अद्भुतं च धनूरत्नं तत्रैकं द्रष्टुमर्हसि ॥ ७ ॥

तद्धि पूर्वं नरश्रेष्ठ दत्तं सदसि दैवतैः ।
अप्रमेयबलं घोरं मखे परमभास्वरम् ॥ ८ ॥

नास्य देवा न गन्धर्वा नासुरा न च राक्षसाः ।
कर्तुमारोपणं शक्ता न कथंचन मानुषाः ॥ ९ ॥

धनुषस्तस्य वीर्यं तु जिज्ञासन्तो महीक्षितः ।
न शेकुरारोपयितुं राजपुत्रा महाबलाः ॥ १० ॥

तद्धनुर्नरशार्दूल मैथिलस्य महात्मनः ।
तत्र द्रक्ष्यसि काकुत्स्थ यज्ञं चाद्भुतदर्शनम् ॥ ११ ॥

तद्धि यज्ञफलं तेन मैथिलेनोत्तमं धनुः ।
याचितं नरशार्दूल सुनाभं सर्वदैवतैः ॥ १२ ॥

आयागभूतं नृपतेस्तस्य वेश्मनि राघव ।
अर्चितं विविधैर्गन्धैर्धूपैश्चागरुगन्धिभिः ॥ १३ ॥

एवमुक्त्वा मुनिवरः प्रस्थानमकरोत्तदा ।
सर्षिसंघः सकाकुत्स्थ आमन्त्र्य वनदेवताः ॥

स्वस्ति वोऽस्तु गमिष्यामि सिद्धः सिद्धाश्रमादहम् ।
उत्तरे जाह्नवीतीरे हिमवन्तं शिलोच्चयम् ॥ १५ ॥

प्रदक्षिणं ततः कृत्वा सिद्धाश्रममनुत्तमम् ।
उत्तरां दिशमुद्दिश्य प्रस्थातुमुपचक्रमे ॥ १६ ॥

तं प्रयान्तं मुनिवरमन्वयादनुसारिणम् ।
शकटीशतमात्रं च प्रयाते ब्रह्मवादिनाम् ॥ १७ ॥

मृगपक्षिगणाश्चैव सिद्धाश्रमनिवासिनः ।
अनुजग्मुर्महात्मानं विश्वामित्रं महामुनिम् ॥१८॥

निवर्तयामास ततः पक्षिसंघान्मृगानपि ।
ते गत्वा दूरमध्वानं लम्बमाने दिवाकरे ॥ १९ ॥

वासं चक्रुर्मुनिगणाः शोणकूले समाहिताः ।
तेऽस्तं गते दिनकरे स्नात्वा हुतहुताशनाः ॥२०॥

विश्वामित्रं पुरस्कृत्य निषेदुरमितौजसः ।
रामो हि सहसौमित्रिर्मुनींस्तानभिपूज्य च ॥२१॥

अग्रतो निषसादाथ विश्वामित्रस्य धीमतः ।
अथ रामो महातेजा विश्वामित्रं महामुनिम् ॥

पप्रच्छ नरशार्दूलः कौतूहलसमन्वितः ।
भगवन् को न्वयं देशः समृद्धवनशोभितः ॥२२॥

श्रोतुमिच्छामि भद्रं ते वक्तुमर्हसि तत्त्वतः ।
चोदितो रामवाक्येन कथयामास सुव्रतः ।
तस्य देशस्य निखिलमृषिमध्ये महातपाः ॥ २४ ॥

इति एकत्रिंशः सर्गः ॥

# द्वात्रिंशः सर्गः ॥



ब्रह्मयोनिर्महानासीत्कुशो नाम महातपाः ।
अक्लिष्टव्रतधर्मज्ञः सज्जनप्रतिपूजकः ॥ १ ॥

स महात्मा कुलीनायां युक्तायां सुगुणोल्बणान् ।
वैदर्भ्यां जनयामास चतुरः सदृशान्सुतान् ॥ २ ॥

कुशाम्बं कुशनाभं च आधूर्तरजसं वसुम् ।
दीप्तियुक्तान्महोत्साहान्क्षत्रधर्मचिकीर्षया ॥ ३ ॥

तानुवाच कुशः पुत्रान्धर्मिष्ठान्सत्यवादिनः ।
क्रियतां पालनं पुत्रा धर्मं प्राप्स्यथ पुष्कलम् ॥

कुशस्य वचनं श्रुत्वा चत्वारो लोकसंमताः ।
निवेशं चक्रिरे सर्वे पुराणां नृवरास्तदा ॥ ५ ॥

कुशाम्बस्तु महातेजाः कौशाम्बीमकरोत्पुरीम् ।
कुशनाभस्तु धर्मात्मा पुरं चक्रे महोदयम् ॥ ६ ॥

आधूर्तरजसो राम धर्मारण्यं महीपतिः ।
चक्रे पुरवरं राजा वसुश्चक्रे गिरिव्रजम् ॥ ७ ॥

एषा वसुमती राम वसोस्तस्य महात्मनः ।
एते शैलवराः पञ्च प्रकाशन्ते समन्ततः ॥ ८ ॥

सुमागधी नदी पुण्या मगधान्विश्रुता ययौ ।
पञ्चानां शैलमुख्यानां मध्ये मालेव शोभते ॥ ९ ॥

सैषा हि मागधी राम वसोस्तस्य महात्मनः ।
पूर्वाभिचरिता राम सुक्षेत्रा सस्यमालिनी ॥ १० ॥

कुशनाभस्तु राजर्षिः कन्याशतमनुत्तमम् ।
जनयामास धर्मात्मा घृताच्यां रघुनन्दन ॥ ११ ॥

तास्तु यौवनशालिन्यो रूपवत्यः स्वलङ्कृताः ।
उद्यानभूमिमागम्य प्रावृषीव शतह्रदाः ॥ १२ ॥

गायन्त्यो नृत्यमानाश्च वादयन्त्यश्च सर्वशः ।
आमोदं परमं जग्मुर्वराभरणभूषिताः ॥ १३ ॥

अथ ताश्चारुसर्वाङ्ग्यो रूपेणाप्रतिमा भुवि ।
उद्यानभूमिमागम्य तारा इव घनान्तरे ॥ १४ ॥

ताः सर्वगुणसंपन्ना रूपयौवनसंयुताः ।
दृष्ट्वा सर्वात्मको वायुरिदं वचनमब्रवीत् ॥ १५ ॥

अहं वः कामये सर्वा भार्या मम भविष्यथ ।
मानुषस्त्यज्यतां भावो दीर्घमायुरवाप्स्यथ ॥ १६ ॥

चलं हि यौवनं नित्यं मानुषेषु विशेषतः ।
अक्षय्यं यौवनं प्राप्ता अमर्यश्च भविष्यथ ॥ १७ ॥

तस्य तद्वचनं श्रुत्वा वायोरक्लिष्टकर्मणः ।
अपहास्य ततो वाक्यं कन्याशतमथाब्रवीत् । १८॥

अन्तश्चरसि भूतानां सर्वेषां त्वं सुरोत्तम ।
प्रभावज्ञाश्च ते सर्वाः किमस्मानवमन्यसे ॥ १९ ॥

कुशनाभसुताः सर्वाः समर्थास्त्वां सुरोत्तम ।
स्थानाच्च्यावयितुं देवं रक्षामस्तु तपो वयम् ।

मा भूत्स कालो दुर्मेधः पितरं सत्यवादिनम् ।
नावमन्यस्व धर्मेण स्वयंवरमुपास्महे । २१ ॥

पिता हि प्रभुरस्माकं दैवतं परमं च नः ।
यस्य नो दास्यति पिता स नो भर्ता भविष्यति ॥

तासां तद्वचनं श्रुत्वा वायुः परमकोपनः ।
प्रविश्य सर्वगात्राणि बभञ्ज भगवान्प्रभुः ॥२३॥

ताः कन्या वायुना भग्ना विविशुर्नृपतेर्गृहम् ।
प्रापतन्भुवि संभ्रान्ताः सलज्जाः साश्रुलोचनाः ॥

स च ता दयिता दीनाः कन्याः परमशोभनाः ।
दृष्ट्वा भग्नास्तदा राजा संभ्रान्त इदमब्रवीत् ॥२५॥

किमिदं कथ्यतां पुत्र्यः को धर्ममवमन्यते ।
कुब्जाः केन कृताः सर्वा वेष्टन्त्यो नाभिभाषथ ।
एवं राजा विनिश्वस्य समाधिं संदधे ततः ॥

इति द्वात्रिंशः सर्गः ॥



## त्रयस्त्रिंशः सर्गः ॥



तस्य तद्वचनं श्रुत्वा कुशनाभस्य धीमतः ।
शिरोभिश्चरणौ स्पृष्ट्वा कन्याशतमभाषत ॥ १ ॥

वायुः सर्वात्मको राजन्प्रधर्षयितुमिच्छति ।
अशुभं मार्गमास्थाय न धर्मं प्रत्यवेक्षते ॥ २ ॥

पितृमत्यः स्म भद्रं ते स्वच्छन्दे न वयं स्थिताः।
पितरं नो वृणीष्व त्वं यदि नो दास्यते तव ॥

तेन पापानुबन्धेन वचनं नप्रतीच्छता।
एवं ब्रुवन्त्यः सर्वाः स्म वायुना निहता भृशम् ॥

तासां तद्वचनं श्रुत्वा राजा परमधार्मिकः।
प्रत्युवाच महातेजाः कन्याशतमनुत्तमम् ॥ ५ ॥

क्षान्तं क्षमावतां पुत्र्यः कर्तव्यं सुमहत्कृतम्।
ऐकमत्यमुपागम्य कुलं चावेक्षितं मम ॥ ६ ॥

अलंकारो हि नारीणां क्षमा तु पुरुषस्य वा।
दुष्करं तच्च यत्क्षान्तं त्रिदशेषु विशेषतः ॥ ७ ॥

यादृशी वः क्षमा पुत्र्यः सर्वासामविशेषतः।
क्षमा दानं क्षमा सत्यं क्षमा यज्ञश्च पुत्रिकाः ॥

क्षमा यशः क्षमा धर्मः क्षमया विष्ठितं जगत्।
विसृज्य कन्याः काकुत्स्थ राजा त्रिदशविक्रमः ॥

मन्त्रज्ञो मन्त्रयामास प्रदानं सह मन्त्रिभिः।
देशे काले प्रदानस्य सदृशे प्रतिपादनम् ॥ १० ॥

एतस्मिन्नेव काले तु चूली नाम महामुनिः ।
ऊर्ध्वरेताः शुभाचारो ब्राह्मं तप उपागमत् ॥

तप्यन्तं तमृषिं तत्र गन्धर्वी पर्युपासते ।
सोमदा नाम भद्रं ते ऊर्मिलातनया तदा ॥१२॥

सा च तं प्रणता भूत्वा शुश्रूषणपरायणा ।
उवास काले धर्मिष्ठा तस्यास्तुष्टोऽभवद्गुरुः ॥

स च तां कालयोगेन प्रोवाच रघुनन्दन ।
परितुष्टोऽस्मि भद्रं ते किं करोमि तव प्रियम् ॥

परितुष्टं मुनिं ज्ञात्वा गन्धर्वी मधुरस्वरम् ।
उवाच परमप्रीता वाक्यज्ञा वाक्यकोविदम् ॥

लक्ष्म्या समुदितो ब्राह्म्या ब्रह्मभूतो महातपाः ।
ब्राह्मेण तपसा युक्तं पुत्रमिच्छामि धार्मिकम् ॥

अपतिश्चास्मि भद्रं ते भार्या चास्मि न कस्यचित् ।
ब्राह्मेणोपगतायाश्च दातुमर्हसि मे सुतम् ॥ १७ ॥

तस्याः प्रसन्नो ब्रह्मर्षिर्ददौ पुत्रं तथाविधम् ।
ब्रह्मदत्त इति ख्यातं मानसं चूलिनः सुतम् ॥

स राजा सोमदेयस्तु पुरीमध्यवसत्तदा ।
काम्पिल्यां परया लक्ष्म्या देवराजो यथा दिवम् ॥

स बुद्धिं कृतवान्राजा कुशनाभः सुधार्मिकः ।
ब्रह्मदत्ताय काकुत्स्थ दातुं कन्याशतं तदा ॥२०॥

तमाहूय महातेजा ब्रह्मदत्तं महीपतिः ।
ददौ कन्याशतं राजा सुप्रीतेनान्तरात्मना ॥२१॥

यथाक्रमं ततः पाणिं जग्राह रघुनन्दन ।
ब्रह्मदत्तो महीपालस्तासां देवपतिर्यथा ॥ २२ ॥

स्पृष्टमात्रे ततः पाणौ विकुब्जा विगतज्वराः ।
युक्ताः परमया लक्ष्म्या बभुः कन्याः शतं तदा ॥

स दृष्ट्वा वायुना मुक्ताः कुशनाभो महीपतिः ।
बभूव परमप्रीतो हर्षं लेभे पुनः पुनः ॥ २४ ॥

कृतोद्वाहं तु राजानं ब्रह्मदत्तं महीपतिः ।
सदारं प्रेषयामास सोपाध्यायगणं तदा ॥ २५ ॥

सोमदापि सुसंहृष्टा पुत्रस्य सदृशीं क्रियाम् ।
यथान्यायं च गन्धर्वी स्नुषास्ताः प्रत्यनन्दत ।

दृष्ट्वा स्पृष्ट्वा च ताः कन्याः कुशनाभं प्रशस्य च ॥

इति त्रयस्त्रिंशः सर्गः ॥



## चतुस्त्रिंशः सर्गः ॥

कृतोद्वाहे गते तस्मिन्ब्रह्मदत्ते च राघव ।
अपुत्रः पुत्रलाभाय पौत्रीमिष्टिमकल्पयत् ॥ १ ॥

इष्ट्यां तु वर्तमानायां कुशनाभं महीपतिम् ।
उवाच परमोदारः कुशो ब्रह्मसुतस्तदा ॥ २ ॥

पुत्र ते सदृशः पुत्रो भविष्यति सुधार्मिकः ।
गाधिं प्राप्स्यसि तेन त्वं कीर्त्तिं लोके च शाश्वतीम् ॥

एवमुक्त्वा कुशो राम कुशनाभं महीपतिम् ।
जगामाकाशमाविश्य ब्रह्मलोकं सनातनम् ॥ ४ ॥

कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः ।
जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः ॥ ५ ॥

स पिता मम काकुत्स्थ गाधिः परमधार्मिकः ।
कुशवंशप्रसूतोऽस्मि कौशिको रघुनन्दन ॥ ६ ॥

पूर्वजा भगिनी चापि मम राघव सुव्रता ।
नाम्ना सत्यवती नाम ऋचीके प्रतिपादिता ॥

सशरीरा गता स्वर्गं भर्तारमनुवर्त्तिनी ।
कौशिकी परमोदारा सा प्रवृत्ता महानदी ॥

दिव्या पुण्योदका रम्या हिमवन्तमुपाश्रिता ।
लोकस्य हितकामार्थं प्रवृत्ता भगिनी मम ॥ ९ ॥

ततोऽहं हिमवत्पार्श्वे वसामि निरतः सुखम् ।
भगिन्यां स्नेहसंयुक्तः कौशिक्यां रघुनन्दन ॥

सा तु सत्यवती पुण्या सत्ये धर्मे प्रतिष्ठिता ।
पतिव्रता महाभागा कौशिकी सरितां वरा ॥

अहं हि नियमाद्राम हित्वा तां समुपागतः ।
सिद्धाश्रममनुप्राप्य सिद्धोऽस्मि तव तेजसा ॥

एषा राम ममोत्पत्तिः स्वस्य वंशस्य कीर्तिता ।
देशस्य च महाबाहो यन्मां त्वं परिपृच्छसि ॥

गतोऽर्धरात्रः काकुत्स्थ कथाः कथयतो मम ।
निद्रामभ्येहि भद्रं ते मा भूद्विघ्नोऽध्वनीह नः ॥

निष्पन्दास्तरवः सर्वे निलीना मृगपक्षिणः ।
नैशेन तमसा व्याप्ता दिशश्च रघुनन्दन ॥ १५ ॥

शनैर्वियुज्यते संध्या नभो नेत्रैरिवावृतम् ।
नक्षत्रतारागहनं ज्योतिर्भिरवभास्यते ॥ १६ ॥

उत्तिष्ठति च शीतांशुः शशी लोकतमोनुदः ।
ह्लादयन्प्राणिनां लोके मनांसि प्रभया विभो ॥

नैशानि सर्वभूतानि प्रचरन्ति ततस्ततः ।
यक्षराक्षससंघाश्च रौद्राश्च पिशिताशनाः ॥ १८ ॥

एवमुक्त्वा महातेजा विरराम महामुनिः ।
साधु साध्विति तं सर्वे मुनयो ह्यभ्यपूजयन् ॥

कुशिकानामयं वंशो महान्धर्मपरः सदा ।
ब्रह्मोपमा महात्मानः कुशवंश्या नरोत्तमाः ॥

विशेषेण भवानेव विश्वामित्रो महायशाः ।
कौशिकी च सरिच्छ्रेष्ठा कुलोद्योतकरी तव ॥

इति तैर्मुनिशार्दूलैः प्रशस्तः कुशिकात्मजः ।
निद्रामुपागमच्छ्रीमानस्तं गत इवांशुमान् ॥ २२ ॥

रामोऽपि सहसौमित्रिः किंचिदागतविस्मयः ।
प्रशस्य मुनिशार्दूलं निद्रां समुपसेवते ॥ २३ ॥

इति चतुस्त्रिंशः सर्गः ॥

## पञ्चत्रिंशः सर्गः ॥

उपास्य रात्रिशेषं तु शोणकूले महर्षिभिः ।
निशायां सुप्रभातायां विश्वामित्रोऽभ्यभाषत ॥

सुप्रभाता निशा राम पूर्वा संन्ध्या प्रवर्तते ।
उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥ २ ॥

तच्छ्रुत्वा वचनं तस्य कृत्वा पौर्वाह्णिकीं क्रियाम् ।
गमनं रोचयामास वाक्यं चेदमुवाच ह ॥ ३ ॥

अयं शोणः शुभजलो गाधः पुलिनमण्डितः ।
कतरेण पथा ब्रह्मन्संतरिष्यामहे वयम् ॥ ४ ॥

एवमुक्तस्तु रामेण विश्वामित्रोऽब्रवीदिदम् ।
एष पन्था मयोद्दिष्टो येन यान्ति महर्षयः ॥ ५ ॥

एवमुक्ता महर्षयो विश्वामित्रेण धीमता ।
पश्यन्तस्ते प्रयाता वै वनानि विविधानि च ॥

ते गत्वा दूरमध्वानं गतेऽर्धेऽदिवसे तदा ।
जाह्नवीं सरितां श्रेष्ठां ददृशुर्मुनिसेविताम् ॥ ७ ॥

तां दृष्ट्वा पुण्यसलिलां हंससारससेविताम् ।
बभूवुर्मुनयः सर्वे मुदिताः सहराघवाः ॥ ८ ॥

तस्यास्तीरे ततश्चक्रुस्त आवासपरिग्रहम् ।
ततः स्नात्वा यथान्यायं संतर्प्य पितृदेवताः ॥

हुत्वा चैवाग्निहोत्राणि प्राश्य चानुत्तमं हविः ।
विविशुर्जाह्नवीतीरे शुचौ मुदितमानसाः ॥ १० ॥

विश्वामित्रं महात्मानं परिवार्य समन्ततः ।
संप्रहृष्टमना रामो विश्वामित्रमथाब्रवीत् ॥ ११ ॥

भगवञ्श्रोतुमिच्छामि गङ्गां त्रिपथगां नदीम् ।
त्रैलोक्यं कथमाक्रम्य गता नदनदीपतिम् ॥ १२ ॥

चोदितो रामवाक्येन विश्वामित्रो महामुनिः ।
वृद्धिं जन्म च गङ्गाया वक्तुमेवोपचक्रमे ॥ १३ ॥

शैलेन्द्रो हिमवान्नाम धातूनामाकरो महान् ।
तस्य कन्याद्वयं जातं रूपेणाप्रतिमं भुवि ॥ १४ ॥

या मेरुदुहिता राम तयोर्माता सुमध्यमा ।
नाम्ना मनोज्ञा मेना वै पत्नी हिमवतः प्रिया ॥

तस्यां गङ्गेयमभवज्ज्येष्ठा हिमवतः सुता ।
उमा नाम द्वितीयाभूत्कन्या तस्यैव राघव ॥ १५ ॥

अथ ज्येष्ठां सुराः सर्वे देवतार्थचिकीर्षया ।
शैलेन्द्रं वरयामासुर्गङ्गां त्रिपथगां नदीम् ॥ १७ ॥

ददौ धर्मेण हिमवांस्तनयां लोकपावनीम् ।
स्वच्छन्दपथगां गङ्गां त्रैलोक्यहितकाम्यया ॥ १८ ॥

प्रतिगृह्य ततो देवास्त्रिलोकहितकारिणः ।
गङ्गामादाय तेऽगच्छन्कृतार्थेनान्तरात्मना ॥ १९ ॥

या चान्या शैलदुहिता कन्यासीद्रघुनन्दन ।
उग्रं सा व्रतमास्थाय तपस्तेपे तपोधना ॥ २० ॥

उग्रेण तपसा युक्तां ददौ शैलवरः सुताम् ।
रुद्रायाप्रतिरूपाय उमां लोकनमस्कृताम् ॥ २१ ॥

एते ते शैलराजस्य सुते लोकनमस्कृते ।
गङ्गा च सरितां श्रेष्ठा उमा देवी च राघव ॥

एतत्ते सर्वमाख्यातं यथा त्रिपथगा नदी
खं गता प्रथमं तात गङ्गा गतिमतां वर ॥ २३ ॥

सैषा सुरनदी रम्या शैलेन्द्रस्य सुता तदा ।
सुरलोकं समारूढा विपापा जलवाहिनी ॥ २४ ॥

इति पञ्चत्रिंशः सर्गः ॥

## षट्त्रिंशः सर्गः ॥

उक्तवाक्ये मुनौ तस्मिन्नुभौ राघवलक्ष्मणौ ।
अभिनन्द्य कथां वीरावूचतुर्मुनिपुंगवम् ॥ १ ॥

धर्मयुक्तमिदं ब्रह्मन्कथितं परमं त्वया ।
दुहितुः शैलराजस्य ज्येष्ठाया वक्तुमर्हसि ॥ २ ॥

विस्तरं विस्तरज्ञोऽसि दिव्यमानुषसंभवम्
त्रिपथो हेतुना केन प्लावयेल्लोकपावनी। ३ ॥

कथं गङ्गा त्रिपथगा विश्रुता सरिदुत्तमा।
त्रिषु लोकेषु धर्मज्ञ कर्मभिः कैः समन्विता॥४॥

तथा ब्रुवति काकुत्स्थे विश्वामित्रस्तपोधनः।
निखिलेन कथां सर्वामृषिमध्ये न्यवेदयत्॥ ५

पुरा राम कृतोद्वाहो नीलकण्ठो महातपाः।
दृष्ट्वा च स्पृहया देवीं मैथुनायोपचक्रमे ॥ ६ ॥

शितिकण्ठस्य देवस्य दिव्यं वर्षशतं गतम्।
तस्य संक्रीडमानस्य महादेवस्य धीमतः॥ ७॥

न चापि तनयो राम तस्यामासीत्परंतप।
ततो देवाः समुद्विग्नाः पितामहपुरोगमाः॥ ८॥

यदिहोत्पद्यते भूतं कस्तत्प्रतिसहिष्यते।
अभिगम्य सुराः सर्वे प्रणिपत्येदमब्रुवन्॥ ९॥

देवदेव महादेव लोकस्यास्य हिते रत।
सुराणां प्रणिपातेन प्रसादं कर्तुमर्हसि॥ १०॥

न लोका धारयिष्यन्ति तव तेजः सुरोत्तम ।
ब्राह्मेण तपसा युक्तो देव्या सह तपश्चर ॥ ११ ॥

त्रैलोक्यहितकामार्थं तेजस्तेजसि धारय ।
रक्ष सर्वानिमाँल्लोकान्नालोकं कर्तुमर्हसि ॥ १२ ॥

देवतानां वचः श्रुत्वा सर्वलोकमहेश्वरः ।
बाढमित्यब्रवीत्सर्वान्पुनश्चेदमुवाच ह ॥ १३ ॥

धारयिष्याम्यहं तेजस्तेजस्येव सहोमया ।
त्रिदशाः पृथिवी चैव निर्वाणमधिगच्छतु ॥१४॥

यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् ।
धारयिष्यति कस्तन्मे ब्रुवन्तु सुरसत्तमाः ॥१५॥

एवमुक्तास्ततो देवाः प्रत्यूचुर्वृषभध्वजम् ।
यत्तेजः क्षुभितं ह्येतत्तद्धरा धारयिष्यति ॥ १६ ॥

एवमुक्तः सुरपतिः प्रमुमोच महीतले ।
तेजसा पृथिवी येन व्याप्ता सगिरिकानना ॥

ततो देवा पुनरिदमूचुश्चाथ हुताशनम ।
प्रविश त्वं महातेजो रौद्रं वायुसमन्वितः ॥१८॥

तदग्निना पुनर्व्याप्तं संजातः श्वेतपर्वतः ।
दिव्यं शरवणं चैव पावकादित्यसंनिभम् ॥१९॥

यत्र जातो महातेजाः कार्तिकेयोऽग्निसंभवः ।
अथोमां च शिवं चैव देवाः सर्षिगणास्तदा ॥

पूजयामासुरत्यर्थं सुप्रीतमनसस्ततः ।
अथ शैलसुता राम त्रिदशानिदमब्रवीत् ॥ २१ ॥

अप्रियस्य कृतस्याद्य फलं प्राप्स्यथ मे सुराः ।
इत्युक्त्वा सलिलं गृह्य पार्वती भास्करप्रभा ॥

समन्युरशपत्सर्वान्क्रोधसंरक्तलोचना ।
यस्मान्निवारिता चैव संगतिः पुत्रकाम्यया ॥

अपत्यं स्वेषु दारेषु नोत्पादयितुमर्हथ ।
अद्यप्रभृति युष्माकमप्रजाः सन्तु पत्नयः॥ २४ ॥

एवमुक्त्वा सुरान्सर्वाञ्शशाप पृथिवीमपि ।
अवने नैकरूपा त्वं बहुभार्या भविष्यसि ॥ २५ ॥

न च पुत्रकृतां प्रीतिं मत्क्रोधकलुषीकृता ।
प्राप्स्यसि त्वं सुदुर्मेधे मम पुत्रमनिच्छती ॥२६॥

तान्सर्वान्व्रीडितान्दृष्ट्वा सुरान्सुरपतिस्तदा ।
गमनायोपचक्राम दिशं वरुणपालिताम् ॥ २७ ॥

स गत्वा तप आतिष्ठत्पार्श्वे तस्योत्तरं गिरेः ।
हिमवत्प्रभवे शृङ्गे सह देव्या महेश्वरः ॥ २८ ॥

एष ते विस्तरो राम शैलपुत्र्या निवेदितः ।
गङ्गायाः प्रभवं चैव शृणु मे सहलक्ष्मणः ॥ २९॥

इति षट्त्रिंशः सर्गः ॥



## सप्तत्रिंशः सर्गः ॥



तप्यमाने तपो देवे देवाः सर्षिगणाः पुरा ।
सेनापतिमभीप्सन्तः पितामहमुपागमन् ॥ १ ॥

ततोऽब्रुवन्सुराः सर्वे भगवन्तं पितामहम् ।
प्रणिपत्य शुभं वाक्यं सेन्द्राः साग्निपुरोगमाः ॥

यो नः सेनापतिर्देव दत्तो भगवता पुरा ।
तपः परममास्थाय तप्यते स्म सहोमया ॥ ३ ॥

यदत्रानन्तरं कार्यं लोकानां हितकाम्यया ।
संविधत्स्व विधानज्ञ त्वं हि नः परमा गतिः ॥

देवतानां वचः श्रुत्वा सर्वलोकपितामहः ।
सान्त्वयन्मधुरैर्वाक्यैस्त्रिदशानिदमब्रवीत् ॥ ५ ॥

शैलपुत्र्या यदुक्तं तन्न प्रजाः सन्तु पत्निषु ।
तस्या वचनमक्लिष्टं सत्यमेव न संशयः ॥ ६ ॥

इदमाकाशगा गङ्गा यस्यां पुत्रं हुताशनः ।
जनयिष्यति देवानां सेनापतिमरिंदमम् ॥ ७ ॥

ज्येष्ठा शैलेन्द्रदुहिता मानयिष्यति तं सुतम् ।
उमायास्तद्बहुमतं भविष्यति न संशयः ॥ ८ ॥

तच्छ्रुत्वा वचनं तस्य कृतार्था रघुनन्दन ।
प्रणिपत्य सुराः सर्वे पितामहमपूजयन् ॥ ९ ॥

ते गत्वा पर्वतं राम कैलासं धातुमण्डितम् ।
अग्निं नियोजयामासुः पुत्रार्थं सर्वदेवताः ॥१०॥

देवकार्यमिदं देव संविधत्स्व हुताशन ।
शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज ॥११॥

देवतानां प्रतिज्ञाय गङ्गामभ्येत्य पावकः ।
गर्भं धारय वै देवि देवतानामिदं प्रियम् ॥ १२ ॥

अग्नेस्तु वचनं श्रुत्वा दिव्यं रूपमधारयत् ।
दृष्ट्वा तन्महिमानं स समन्तादवकीर्यत ॥ १३ ॥

समन्ततस्तदा देवीमभ्यषिञ्चत पावकः ।
सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन ॥ १४ ॥

तमुवाच ततो गङ्गा सर्वदेवपुरोगमम् ।
अशक्ता धारणे देव तव तेजः समुद्धतम् ॥ १५ ॥

दह्यमानाग्निना तेन संप्रव्यथितचेतसा ।
अथाब्रवीदिदं गङ्गां सर्वदेवहुताशनः ॥ १६ ॥

इह हैमवते पादे गर्भोऽयं संनिवेश्यताम् ।
श्रुत्वा त्वग्निवचो गङ्गा तं गर्भमतिभास्वरम् ।

उत्ससर्ज महातेजाः स्रोतोभ्यो हि तदानघ ।
यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ॥ १८ ॥

काञ्चनं धरणीं प्राप्तं हिरण्यममलं शुभम् ।
ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत ॥

मलं तस्याभवत्तत्र त्रपु सीसकमेव च ।
तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ २० ॥

निक्षिप्तमात्रे गर्भे तु तेजोभिरभिरञ्जितम् ।
सर्वं पर्वतसंनद्धं सौवर्णमभवद्वनम् ॥ २१ ॥

जातरूपमिति ख्यातं तदाप्रभृति राघव ।
सुवर्णं पुरुषव्याघ्र हुताशनसमप्रभम् ॥ २२ ॥

तृणवृक्षलतागुल्मं सर्वं भवति काञ्चनम् ।
तं कुमारं ततो जातं सेन्द्राः सहमरुद्गणाः ॥ २३ ॥

क्षीरसंभावनार्थाय कृत्तिकाः समयोजयन् ।
ताः क्षीरं जातमात्रस्य कृत्वा समयमुत्तमम् ॥

ददुः पुत्रोऽयमस्माकं सर्वासामिति निश्चिताः ।
ततस्तु देवताः सर्वाः कार्तिकेय इति ब्रुवन् ॥

पुत्रस्त्रैलोक्यविख्यातो भविष्यति न संशयः ।
तेषां तद्वचनं श्रुत्वा स्कन्नं गर्भपरिस्रवे ॥ २६ ॥

स्नापयन्परया लक्ष्म्या दीप्यमानं यथानलम् ।
स्कन्द इत्यब्रुवन्देवाः स्कन्नं गर्भपरिस्रवात् ॥ २७ ॥

कार्तिकेयं महाभागं काकुत्स्थ ज्वलनोपमम् ।
प्रादुर्भूतं ततः क्षीरं कृत्तिकानामनुत्तमम् ॥ २८

षण्णां षडाननो भूत्वा जग्राह स्तनजं पयः ।
गृहीत्वा क्षीरमेकाह्ना सुकुमारवपुस्तदा ॥ २९ ॥

अजयत्स्वेन वीर्येण दैत्यसैन्यगणान्विभुः ।
सुरसेनागणपतिं ततस्तममलद्युतिम् ॥ ३० ॥

अभ्यषिञ्चन्सुरगणाः समेत्याग्निपुरोगमाः ।
एष ते राम गङ्गाया विस्तरोऽभिहितो मया ॥

कुमारसंभवश्चैव धन्यः पुण्यस्तथैव च ।
भक्तश्च यः कार्तिकेये काकुत्स्थ भुवि मानवः ।
आयुष्मान्पुत्रपौत्रैश्च स्कन्दसालोक्यतां व्रजेत् ॥

इति सप्तत्रिंशः सर्गः ॥

## अष्टत्रिंशः सर्गः

*

तां कथां कौशिको रामे निवेद्य मधुराक्षराम् ।
पुनरेवापरं वाक्यं काकुत्स्थमिदमब्रवीत् ॥ १ ॥

अयोध्याधिपतिः शूरः पूर्वमासीन्नराधिपः ।
सगरो नाम धर्मात्मा प्रजाकामः स चाप्रजाः ॥

वैदर्भदुहिता राम केशिनी नाम नामतः ।
ज्येष्ठा सगरपत्नी सा धर्मिष्ठा सत्यवादिनी ॥ ३ ॥

अरिष्टनेमिदुहिता रूपणाप्रतिमा सुवि ।
द्वितीया सगरस्यासीत्पत्नी सुमतिसंज्ञिता ॥ ४ ॥

ताभ्यां सह तदा राजा पत्नीभ्यां तप्तवांस्तपः ।
हिमवन्तं समासाद्य भृगुप्रस्रवणे गिरौ ॥ ५ ॥

अथ वर्षशते पूर्णे तपमाराधितो मुनिः ।
सगराय वरं प्रादाद्भृगुः सत्यवतां वरः ॥ ६ ॥

अपत्यलाभः सुमहान्भविष्यति तवानघ ।
कीर्तिं चाप्रतिमां लोके प्राप्स्यसे पुरुषर्षभ ॥ ७ ॥

एका जनयिता तात पुत्रं वंशकरं तव ।
षष्टिं पुत्रसहस्राणि अपरा जनयिष्यति ॥ ८ ॥

भाषमाणं महात्मानं राजपुत्र्यौ प्रसाद्य तम् ।
ऊचतुः परमप्रीते कृताञ्जलिपुटे तदा ॥ ९ ॥

एकः कस्याः सुतो ब्रह्मन्का बहूञ्जनयिष्यति ।
श्रोतुमिच्छावहे ब्रह्मन्सत्यमस्तु वचस्तव ॥ १० ॥

तयोस्तद्वचनं श्रुत्वा भृगुः परमधार्मिकः ।
उवाच परमां वाणीं स्वच्छन्दोऽत्र विधीयताम् ॥

एको वंशकरो वास्तु बहवो वा महाबलाः ।
कीर्तिमन्तो महोत्साहाः का वा कं वरमिच्छति ॥

मुनेस्तु वचनं श्रुत्वा केशिनी रघुनन्दन ।
पुत्रं वंशकरं राम जग्राह नृपसंनिधौ ॥ १३ ॥

षष्टिं पुत्रसहस्राणि सुपर्णभगिनी तदा ।
महोत्साहान्कीर्तिमतो जग्राह सुमतिः सुतान् ॥

प्रदक्षिणमृषिं कृत्वा शिरसाभिप्रणम्य च ।
जगाम स्वपुरं राजा सभार्यो रघुनन्दन ॥ १५ ॥

अथ काले गते तस्मिञ्ज्येष्ठा पुत्रं व्यजायत ।
असमञ्ज इति ख्यातं केशिनी सगरात्मजम् ॥

सुमतिस्तु नरव्याघ्र गर्भतुम्बं व्यजायत ।
षष्टिः पुत्राः सहस्राणि तुम्बभेदाद्विनिःसृताः ॥

घृतपूर्णेषु कुम्भेषु धात्र्यस्तान्समवर्धयन् ।
कालेन महता सर्वे यौवनं प्रतिपेदिरे ॥ १८ ॥

अथ दीर्घेण कालेन रूपयौवनशालिनः ।
षष्टिः पुत्रसहस्राणि सगरस्याभवंस्तदा ॥ १९ ॥

स च ज्येष्ठो नरश्रेष्ठः सगरस्यात्मसंभवः ।
बालान्गृहीत्वा तु जले सरय्वा रघुनन्दन ॥१० ॥

प्रक्षिप्य प्रहसन्नित्यं मज्जतस्तान्निरीक्ष्य वै ।
एवं पापसमाचारः सज्जनप्रतिबाधकः ॥ २१ ॥

पौराणामहिते युक्तः पुत्रो निर्वासितः पुरात् ।
तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान् ॥ २२ ॥

संमतः सर्वलोकस्य सर्वस्यापि प्रियंवदः ।
ततः कालेन महता मतिः समभिजायत ॥ २३ ॥

सगरस्य नरश्रेष्ठ यजेयमिति निश्चिता ।
स कृत्वा निश्चयं राम सोपाध्यायगणस्तदा ।
यज्ञकर्मणि वेदज्ञो यष्टुं समुपचक्रमे ॥ २४ ॥

इति अष्टत्रिंशः सर्गः ॥

# एकोनचत्वारिंशः सर्गः ॥

विश्वामित्रवचः श्रुत्वा कथान्ते रघुनन्दनः ।
उवाच परमप्रीतो मुनिं दीप्तमिवानलम् ॥ १ ॥

श्रोतुमिच्छामि भद्रं ते विस्तरेण कथामिमाम् ।
पूर्वको मे कथं ब्रह्मन्यज्ञं वै समुपाहरत् ॥ २ ॥

तस्य तद्वचनं श्रुत्वा कौतूहलसमन्वितम् ।
विश्वामित्रस्तु काकुत्स्थमुवाच प्रहसन्निव ॥ ३ ॥

श्रूयतां विस्तरो राम सगरस्य महात्मनः ।
शंकरश्वशुरो नाम हिमवानचलोत्तमः ॥ ४ ॥

विन्ध्यपर्वतमासाद्य निरीक्षेते परस्परम् ।
तयोर्मध्ये प्रवृत्तोऽभूद्यज्ञः स पुरुषोत्तम ॥ ५ ॥

स हि देशो नरव्याघ्र प्रशस्तो यज्ञकर्मणि ।
तस्याश्वचर्यां काकुत्स्थ दृढधन्वा महारथः ॥ ६ ॥

अंशुमानकरोत्तात सगरस्य मते स्थितः ।
तस्य पर्वणि संयुक्तं यजमानस्य वासवः ॥ ७ ॥

राक्षसीं तनुमास्थाय यज्ञीयाश्वमपाहरत् ।
ह्रियमाणे तु काकुत्स्थ तस्मिन्नश्वे महात्मनः ॥ ८ ॥

उपाध्यायगणाः सर्वे यजमानमथाब्रुवन् ।
अयं पर्वणि वेगेन यज्ञीयाश्वोऽपनीयते ॥ ९ ॥

हर्तारं जहि काकुत्स्थ हयश्चैवोपनीयताम् ।
उपाध्यायवचः श्रुत्वा तस्मिन्सदसि पार्थिवः

षष्टिं पुत्रसहस्राणि वाक्यमेतदुवाच ह ।
गतिं पुत्रा न पश्यामि रक्षसां पुरुषर्षभाः ॥११॥

मन्त्रपूतैर्महाभागैरास्थितो हि महाक्रतुः ।
तद्गच्छत विचिन्वध्वं पुत्रका भद्रमस्तु वः ॥१२॥

समुद्रमालिनीं सर्वां पृथिवीमनुगच्छत ।
एकैकं योजनं पुत्रा विस्तारमभिगच्छत ॥ १३ ॥

यावत्तुरगसंदर्शस्तावत्खनत मेदिनीम् ।
तं चैव हयहर्तारं मार्गमाणा ममाज्ञया ॥ १४ ॥

दीक्षितः पौत्रसहितः सोपाध्यायगणो ह्यहम् ।
इह स्थास्यामि भद्रं वो यावत्तुरगदर्शनम् ॥ १५ ॥

इत्युक्ता हृष्टमनसो राजपुत्रा महाबलाः ।
जग्मुर्महीतलं राम पितुर्वचनयन्त्रिताः ॥ १६ ॥

योजनायामविस्तारमेकैको धरणीतलम् ।
बिभिदुः पुरुषव्याघ्र वज्रस्पर्शसमैर्नखैः ॥ १७ ॥

शूलैरशनिकल्पैश्च हलैश्चापि सुदारुणैः ।
भिद्यमाना वसुमती ननाद रघुनन्दन ॥ १८ ॥

नागानां वध्यमानानामसुराणां च राघव ।
राक्षसानां च दुर्धर्षः सत्त्वानां निनदोऽभवत् ॥

योजनानां सहस्राणि षष्टिं तु रघुनन्दन ।
बिभिदुर्धरणीं वीरा रसातलमनुत्तमम् ॥ २० ॥

एवं पर्वतसंबाधं जम्बूद्वीपं नृपात्मजाः ।
खनन्तो नृपशार्दूल सर्वतः परिचक्रमुः ॥ २१ ॥

ततो देवाः सगन्धर्वाः सासुराः सहपन्नगाः ।
संभ्रान्तमनसः सर्वे पितामहमुपागमन् ॥ २२ ॥

ते प्रसाद्य महात्मानं विषण्णवदनास्तदा ।
ऊचुः परमसंत्रस्ताः पितामहमिदं वचः ॥ २३ ॥

भगवन्पृथिवी सर्वा खन्यते सगरात्मजैः ।
बहवश्च महात्मानो मध्यन्ते जलवासिनः ॥२४॥

अयं यज्ञहरोऽस्माकमनेनाश्वोपनीयते ।
इति ते सर्वभूतानि हिंसन्ति सगरात्मजाः ॥२५॥

इति एकोनचत्वारिंशः सर्गः ॥



## चत्वारिंशः सर्गः ॥

देवतानां वचः श्रुत्वा भगवान्वै पितामहः ।
प्रत्युवाच सुसंत्रस्तान्कृतान्तबलमोहितान् ॥ १ ॥

यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः ।
कापिलं रूपमास्थाय धारयत्यनिशं धराम् ॥ २ ॥

तस्य कोपाग्निना दग्धा भविष्यन्ति नृपात्मजाः ।
पृथिव्याश्चापि निर्भेदो दृष्ट एव सनातनः ॥ ३ ॥

सगरस्य च पुत्राणां विनाशोऽदीर्घजीविनाम् ।
पितामहवचः श्रुत्वा त्रयस्त्रिंशदरिंदम ॥ ४ ॥

देवाः परमसंहृष्टाः पुनर्जग्मुर्यथागतम् ।
सगरस्य च पुत्राणां प्रादुरासीन्महात्मनाम् ॥ ५ ॥

पृथिव्यां भिद्यमानायां निर्घातसमनिःस्वनः ।
ततो गत्वा महीं कृत्स्नां कृत्वा चाभिप्रदक्षिणम् ॥

सहिताः सागराः सर्वे पितरं वाक्यमब्रुवन् ।
परिक्रान्ता मही सर्वा सत्त्ववन्तश्च सूदिताः ॥७॥

देवदानवरक्षांसि पिशाचोरगकिंनराः ।
न च पश्यामहेऽश्वं तमश्वहर्तारमेव च ॥ ८ ॥

किं करिष्याम भद्रं ते बुद्धिरत्र विचार्यताम् ।
तेषां तद्वचनं श्रुत्वा पुत्राणां राजसत्तम ॥ ९ ॥

समन्युरब्रवीद्वाक्यं सगरो रघुनन्दन ।
भूयः खनत भद्रं वो निर्भिद्य वसुधातलम् ॥१०॥

अश्वहर्तारमासाद्य कृतार्थाश्च निवर्तथ ।
पितुर्वचनमास्थाय सगरस्य महात्मनः ॥ ११ ॥

षष्टिः पुत्रसहस्राणि रसातलमभिद्रवन् ।
खन्यमाने ततस्तस्मिन्ददृशुः पर्वतोपमम् ॥१२॥

दिशागजं विरूपाक्षं धारयन्तं महीतलम् ।
सपर्वतवनां कृत्स्नां पृथिवीं रघुनन्दन ॥ १३ ॥

शिरसा धारयामास विरूपाक्षो महागजः ।
यदा पर्वणि काकुत्स्थ विश्रमार्थं महागजः ॥

खेदाच्चालयते शीर्षं भूमिकम्पस्तदा भवेत् ।
तं ते प्रदक्षिणं कृत्वा दिशापालं महागजम् ॥

मानयन्तो हि ते राम जग्मुर्भित्वा रसातलम् ।
ततः पूर्वां दिशं भित्वा दक्षिणां विभिदुः पुनः ॥

दक्षिणस्यामपि दिशि ददृशुस्ते महागजम् ।
महापद्मं महात्मानं सुमहत्पर्वतोपमम् ॥ १७ ॥

शिरसा धारयन्तं ते विस्मयं जग्मुरुत्तमम् ।
ततः प्रदक्षिणं कृत्वा सगरस्य महात्मनः ॥

षष्टिः पुत्रसहस्राणि पश्चिमां विभिदुर्दिशम्
पश्चिमायामपि दिशि महान्तमचलोपमम् ॥

दिशागजं सौमनसं ददृशुस्ते महाबलाः ।
तं ते प्रदक्षिणं कृत्वा पृष्ट्वा चापि निरामयम् ॥

खनन्तः समुपक्रान्ता दिशं हैमवतीं ततः ।
उत्तरस्यां रघुश्रेष्ठ ददृशुर्हिमपाण्डुरम् ॥ २१ ॥

भद्रं भद्रेण वपुषा धारयन्तं महीमिमाम् ।
समालभ्य ततः सर्वे कृत्वा चैनं प्रदक्षिणम् ॥

षष्टिः पुत्रसहस्राणि बिभिदुर्वसुधातलम् ।
ततः प्रागुत्तरां गत्वा सागराः प्रथितां दिशम् ॥

रोषादभ्यखनन्सर्वे पृथिवीं सगरात्मजाः ।
ते तु सर्वे महात्मानो भीमवेगा महाबलाः ॥

ददृशुः कपिलं तत्र वासुदेवं सनातनम् ।
हयं च तस्य देवस्य चरन्तमविदूरतः ॥ २५ ॥

प्रहर्षमतुलं प्राप्ताः सर्वे ते रघुनन्दन ।
ते तं हयहरं ज्ञात्वा क्रोधपर्याकुलेक्षणाः ॥

खनित्रलाङ्गलधरा नानावृक्षशिलाधराः ।
अभ्यधावन्त संक्रुद्धास्तिष्ठ तिष्ठेति चाब्रुवन् ॥

अस्माकं त्वं हि तुरगं यज्ञीयं हृतवानसि ।
दुर्मेधस्त्वं हि संप्राप्तान्विद्धि नः सगरात्मजान् ॥

श्रुत्वा तु वचनं तेषां कपिलो रघुनन्दन ।
रोषेण महताविष्टो हुंकारमकरोत्तदा ॥ २९ ॥

ततस्तेनाप्रमेयेन कपिलेन महात्मना ।
भस्मराशीकृताः सर्वे काकुत्स्थ सगरात्मजाः ॥

इति चत्वारिंशः सर्गः ॥

## एकचत्वारिंशः सर्गः ॥

पुत्रांश्चिरगताञ्ज्ञात्वा सगरो रघुनन्दन ।
नप्तारमब्रवीद्राजा दीप्यमानं स्वतेजसा ॥ १ ॥

शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा ।
पितॄणां गतिमन्विच्छ येन चाश्वोऽपहारितः ॥

अन्तर्भौमानि सत्वानि वीर्यवन्ति महान्ति च ।
तेषां त्वं प्रतिघातार्थं सासिं गृह्णीष्व कार्मुकम् ॥

अभिवाद्याभिवाद्यांस्त्वं हत्वा विघ्नकरानपि ।
सिद्धार्थः संनिवर्तस्व मम यज्ञस्य पारगः ॥ ४ ॥

एवमुक्तोंशुमान्सम्यक्सगरेण महात्मना ।
धनुरादाय खङ्गं च जगाम लघुविक्रमः ॥ ५ ॥

स खातं पितृभिर्मार्गमन्तर्भौमं महात्मभिः ।
प्रापद्यत नरश्रेष्ठस्तेन राज्ञाभिचोदितः ॥ ६ ॥

दैत्यदानवरक्षोभिः पिशाचपतगोरगैः ।
पूज्यमानं महातेजा दिशागजमपश्यत ॥ ७ ॥

स तं प्रदक्षिणं कृत्वा दृष्ट्वा चैव निरामयम् ।
पितॄन्स परिपप्रच्छ वाजिहर्तारमेव च ॥ ८ ॥

दिशागजस्तु तच्छ्रुत्वा प्रत्याहांशुमतो वचः ।
असमञ्ज कृतार्थस्त्वं सहाश्वः शीघ्रमेष्यसि ॥

तस्य तद्वचनं श्रुत्वा सर्वानेव दिशागजान् ।
यथाक्रमं यथान्यायं प्रष्टुं समुपचक्रमे ॥ १० ॥

तैश्च सर्वैर्दिशापालैर्वाक्यज्ञैर्वाक्यकोविदैः ।
पूजितः सहयश्चैव गन्तासीत्यभिचोदितः ॥११॥

तेषां तद्वचनं श्रुत्वा जगाम लघुविक्रमः ।
भस्मराशीकृता यत्र पितरस्तस्य सागराः ॥ १२॥

स दुःखवशमापन्नस्त्वसमञ्जसुतस्तदा ।
चुक्रोश परमार्तस्तु वधात्तेषां सुदुःखितः ॥ ११ ॥

यज्ञीयं च हयं तत्र चरन्तमविदूरतः ।
ददर्श पुरुषव्याघ्रो दुःखशोकसमन्वितः ॥ १२ ॥

स तेषां राजपुत्राणां कर्तुकामो जलक्रियाम् ।
सलिलार्थी महातेजा न चापश्यज्जलाशयम् ॥

विसार्य निपुणां दृष्टिं ततोऽपश्यत्खगाधिपम् ।
पितॄणां मातुलं राम सुपर्णमनिलोपमम् ॥ १६ ॥

स चैनमब्रवीद्वाक्यं वैनतेयो महाबलः ।
मा शुचः पुरुषव्याघ्र वधोऽयं लोकसंमतः ॥

कपिलेनाप्रमेयेण दग्धा हीमे महाबलाः ।
सलिलं नार्हसि प्राज्ञ दातुमेषां हि लौकिकम् ॥

गङ्गा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ ।
तस्यां कुरु महाबाहो पितॄणां तु जलक्रियाम् ॥

भस्मराशीकृतानेतान्प्लावयेल्लोकपावनी ।
तया क्लिन्नमिदं भस्म गङ्गया लोककान्तया ॥ २० ॥

षष्टिं पुत्रसहस्राणि स्वर्गलोकं नयिष्यति ।
गच्छ चाश्वं महाभाग संगृह्य पुरुषर्षभ ॥ २१ ॥

यज्ञं पैतामहं वीर संवर्तयितुमर्हसि ।
सुपर्णवचनं श्रुत्वा सोंशुमानतिवीर्यवान् ॥ २२ ॥

त्वरितं हयमादाय पुनरायान्महायशाः ।
ततो राजानमासाद्य दीक्षितं रघुनन्दन ॥ २३ ॥

न्यवेदयद्यथावृत्तं सुपर्णवचनं तथा ।
तच्छ्रुत्वा घोरसंकाशं वाक्यमंशुमतो नृपः ॥२४॥

यज्ञं निवर्तयामास यथाकल्पं यथाविधि ।
स्वपुरं चागमच्छ्रीमानिष्टयज्ञो महीपतिः ॥ २५ ॥

गङ्गायाश्चागमे राजा निश्चयं नाध्यगच्छत ।
अगत्वा निश्चयं राजा कालेन महता महान् ।
त्रिंशद्वर्षसहस्राणि राज्यं कृत्वा दिवं गतः ॥ २६ ॥

इति एकचत्वारिंशः सर्गः ॥

---

## द्विचत्वारिंशः सर्गः ॥

कालधर्मं गते राम सगरे प्रकृतीजनाः ।
राजानं रोचयामासुरंशुमन्तं सुधार्मिकम् ॥ १ ॥

स राजा सुमहानासीदंशुमान्रघुनन्दन ।
तस्य पुत्रो महानासीद्दिलीप इति विश्रुतः ॥ २ ॥

तस्मिन्राज्यं समावेश्य दिलीपे रघुनन्दन ।
हिमवच्छिखरे पुण्ये तपस्तेपे सुदारुणम् ॥ ३ ॥

द्वात्रिंशच्च सहस्राणि वर्षाणि सुमहायशाः ।
तपोवनं गतो राम स्वर्गं लेभे महायशाः ॥ ४ ॥

दिलीपस्तु महातेजाः श्रुत्वा पैतामहं वधम् ।
दुःखोपहतया बुद्ध्या निश्चयं नाधिगच्छति ॥

कथं गङ्गावतरणं कथं तेषां जलक्रिया ।
तारयेयं कथं चैतानिति चिन्तापरोऽभवत् ॥

तस्य चिन्तयतो नित्यं धर्मेण विदितात्मनः ।
पुत्रो भगीरथो नाम जज्ञे परमधार्मिकः ॥ ७ ॥

दिलीपस्तु महातेजा यज्ञैर्बहुभिरिष्टवान् ।
त्रिंशद्वर्षसहस्राणि राजा राज्यमकारयत् ॥ ८ ॥

अगत्वा निश्चयं राजा तेषामुद्धरणं प्रति ।
व्याधिना नरशार्दूल कालधर्ममुपेयिवान् ॥

इन्द्रलोकं गतो राजा स्वार्जितेनैव कर्मणा ।
राज्ये भगीरथं पुत्रमभिषिच्य नरर्षभः ॥ १० ॥

भगीरथस्तु राजर्षिर्धार्मिको रघुनन्दन ।
अनपत्यो महातेजाः प्रजाकामः स चाप्रजाः ॥

मन्त्रिष्वाधाय तद्राज्यं गङ्गावतरणे रतः ।
स तपो दीर्घमातिष्ठद्गोकर्णे रघुनन्दन ॥ १२ ॥

ऊर्ध्वबाहुः पञ्चतपा मासाहारो जितेन्द्रियः ।
तस्य वर्षसहस्राणि घोरे तपसि तिष्ठतः ॥ १३ ॥

अतीतानि महाबाहो तस्य राज्ञो महात्मनः ।
सुप्रीतो भगवान्ब्रह्मा प्रजानां पतिरीश्वरः ॥

ततः सुरगणैः सार्धमुपागम्य पितामहः ।
भगीरथं महात्मानं तप्यमानमथाब्रवीत् ॥

भगीरथ महाभाग प्रीतस्तेऽहं जनेश्वर ।
तपसा च सुतप्तेन वरं वरय सुव्रत ॥ १६ ॥

तमुवाच महातेजाः सर्वलोकपितामहम् ।
भगीरथो महाभागः कृताञ्जलिरुपस्थितः ॥ १७ ॥

यदि मे भगवन्प्रीतो यद्यस्ति तपसः फलम् ।
सगरस्यात्मजाः सर्वे मत्तः सलिलमाप्नुयुः ॥ १८ ॥

गङ्गायाः सलिलक्लिन्ने भस्मन्येषां महात्मनाम् ।
स्वर्गं गच्छेयुरत्यन्तं सर्वे मे प्रपितामहाः ॥ १९ ॥

देया च संततिर्देव नावसीदेत्कुलं च नः ।
इक्ष्वाकूणां कुले देव एष मेऽस्तु वरः परः ॥२०॥

उक्तवाक्यं तु राजानं सर्वलोकपितामहः ।
प्रत्युवाच शुभां वाणीं मधुरां मधुराक्षराम् ॥२१॥

मनोरथो महानेष भगीरथ महारथ ।
एवं भवतु भद्रं ते इक्ष्वाकुकुलवर्धन ॥ २२ ॥

इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता ।
गङ्गायाः पतनं राजन्पृथिवी न सहिष्यति ॥२३॥

तां वै धारयितुं वीर नान्यं पश्यामि शूलिनः ।
तमेवमुक्त्वा राजानं गङ्गां चाभाष्य लोककृत् ।
जगाम त्रिदिवं देवः सह देवैर्मरुद्गणैः ॥ १४ ॥
इति द्विचत्वारिंशः सर्गः ॥

## त्रिचत्वारिंशः सर्गः ॥

देवदेवे गते तस्मिन्सोऽङ्गुष्ठाग्रनिपीडिताम् ।
कृत्वा वसुमतीं राम संवत्सरमुपासत ॥ १ ॥

ऊर्ध्वबाहुर्निरालम्बो वायुभक्षो निराश्रयः ।
अचलः स्थाणुवत्स्थित्वा रात्रिंदिवमरिंदम ॥ २ ॥

अथ संवत्सरे पूर्णे सर्वलोकनमस्कृतः ।
उमापतिः पशुपती राजानमिदमब्रवीत् ॥ ३ ॥

प्रीतस्तेऽहं नरश्रेष्ठ करिष्यामि तव प्रियम् ।
शिरसा धारयिष्यामि शैलराजसुतामहम् ॥ ४ ॥

ततो हैमवती ज्येष्ठा सर्वलोकनमस्कृता ।
तदा सरिन्महद्रूपं कृत्वा वेगं च दुःसहम् ॥ ५ ॥

आकाशादपतद्राम शिवे शिवशिरस्युत ।
अचिन्तयच्च सा देवी गङ्गा परमदुर्धरा ॥ ६ ॥

विशाम्यहं हि पातालं स्रोतसा गृह्य शंकरम् ।
तस्या वलेपनं ज्ञात्वा क्रुद्धस्तु भगवान्हरः ॥ ७ ॥

तिरोभावयितुं बुद्धिं चक्रे त्रिणयनस्तदा ।
सा तस्मिन्पतिता पुण्या पुण्ये रुद्रस्य मूर्धनि ॥ ८ ॥

हिमवत्प्रतिमे राम जटामण्डलगह्वरे ।
सा कथंचिन्महीं गन्तुं नाशक्नोद्यत्नमास्थिता ॥

नैव निर्गमनं लेभे जटामण्डलमोहिता ।
तत्रैवाबंभ्रमद्देवी संवत्सरगणान्बहून् ॥ १० ॥

तामपश्यन्पुनस्तत्र तपः परममास्थितः ।
अनेन तोषितश्चाभूदत्यर्थं रघुनन्दन ॥ ११ ॥

विससर्ज ततो गङ्गां हरो बिन्दुसरः प्रति ।
तस्यां विसृज्यमानायां सप्त स्रोतांसि जज्ञिरे ॥

ह्लादिनी पावनी चैव नलिनी च तथा परा ।
तिस्रः प्राचीं दिशं जग्मुर्गङ्गाः शिवजलाः शुभाः ॥

सुचक्षुश्चैव सीता च सिन्धुश्चैव महानदी ।
तिस्रस्त्वेता दिशं जग्मुः प्रतीचीं तु शुभोदकाः ॥

सप्तमी चान्वगात्तासां भगीरथमथो नृपम् ।
भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ॥

प्रायादग्रे महातेजा गङ्गा तं चाप्यनुव्रजत् ।
गगनाच्छंकरशिरस्ततो धरणिमागता ॥ १६ ॥

व्यसर्पत जलं तत्र प्रतिशब्दपुरस्कृतम् ।
मत्स्यकच्छपसंघैश्च शिशुमारगणैस्तथा ॥ १७ ॥

पतद्भिः पतितैश्चान्यैर्व्यरोचत वसुंधरा ।
ततो देवर्षिगन्धर्वा यक्षाः सिद्धगणास्तथा ॥१८॥

व्यलोकयन्त ते तत्र गगनाद्गां गतां तदा ।
विमानैर्नगराकारैर्हयैर्गजवरैस्तथा ॥ १९ ॥

पारिप्लवगतैश्चापि देवतास्तत्र विष्ठिताः ।
तदद्भुततमं लोके गङ्गापतनमुत्तमम् ॥ २० ॥

दिदृक्षवो देवगणाः समीयुरमितौजसः ।
संपतद्भिः सुरगणैस्तेषां चाभरणौजसा ॥ २१ ॥

शतादित्यमिवाभाति गगनं गततोयदम् ।
शिशुमारोरगगणैर्मीनैरपि च चञ्चलैः ॥ २२ ॥

विद्युद्भिरिव विक्षिप्तमाकाशमभवत्तदा ।
पाण्डुरैः सलिलोत्पीडैः कीर्यमाणैः सहस्रधा ॥

शारदाभ्रैरिवाकीर्णं गगनं हंससंप्लवैः ।
क्वचिद्द्रुततरं याति कुटिलं क्वचिदायतम् ॥ २४ ॥

विनतं क्वचिदुद्धूतं क्वचिद्याति शनैः शनैः ।
सलिलेनैव सलिलं क्वचिदभ्याहतं पुनः ॥ २५

मुहुरूर्ध्वपथं गत्वा पपात वसुधां ततः ।
व्यरोचत तदा तोयं निर्मलम् गतकल्मषम् ॥

तत्र देवर्षिगन्धर्वा वसुधातलवासिनः ।
भवाङ्गपतितं तोयं पवित्रमिति पस्पृशुः ॥ २७

शापात्प्रपतिता ये च गगनाद्वसुधातलम् ।
कृत्वा तत्राभिषेकं ते बभूवुर्गतकल्मषाः ॥ २८ ॥

धूतपापाः पुनस्तेन तोयेनाथ सुभास्वता ।
पुनराकाशमाविश्य स्वाल्लोँकान्प्रतिपेदिरे ॥ २९ ॥

मुमुदे मुदितो लोकस्तेन तोयेन भास्वता ।
कृताभिषेको गङ्गायां बभूव विगतक्लमः ॥ १० ॥

भगीरथोऽपि राजर्षिर्दिव्यं स्यन्दनमास्थितः ।
प्रायादग्रे महातेजास्तं गङ्गा पृष्ठतोऽन्वगात् ॥

देवाः सर्षिगणाः सर्वे दैत्यदानवराक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ १२ ॥

सर्वाश्चाप्सरसो राम भगीरथरथानुगाम् ।
गङ्गामन्वगमन्प्रीताः सर्वे जलचराश्च ये ॥ १३ ॥

यतो भगीरथो राजा ततो गङ्गा यशस्विनी ।
जगाम सरितां श्रेष्ठा सर्वपापविनाशिनी ॥ १४ ॥

ततो हि यजमानस्य जह्नोरद्भुतकर्मणः ।
गङ्गा संप्लावयामास यज्ञवाटं महात्मनः ॥ १५ ॥

तस्या वलेपनं ज्ञात्वा क्रुद्धो यज्वा तु राघव ।
अपिबच्च जलं सर्वं गङ्गायाः परमाद्भुतम् ॥१६॥

ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः ।
पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् ॥ १७ ॥

गङ्गां चापि नयन्ति स्म दुहितृत्वे महात्मनः।
ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्पुनः ॥३८॥

तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च।
जगाम च पुनर्गङ्गा भगीरथरथानुगा ॥ ३९ ॥

सागरं चापि संप्राप्ता सा सरित्प्रवरा तदा।
रसातलमुपागच्छत्सिद्ध्यर्थं तस्य कर्मणः ॥ ४० ॥

भगीरथोऽपि राजर्षिर्गङ्गामादाय यत्नतः।
पितामहान्भस्मकृतानपश्यद्दीनचेतनः ॥ ४१ ॥

अथ तं भस्मनां राशिं गङ्गासलिलमुत्तमम्।
प्लावयद्धूतपाप्मानः स्वर्गं प्राप्ता रघूत्तम ॥ ४२ ॥

इति त्रिचत्वारिंशः सर्गः॥

## चतुश्चत्वारिंशः सर्गः॥

स गत्वा सागरं राजा गङ्गयानुगतस्तदा।
प्रविवेश तलं भूमेर्यत्र ते भस्मसात्कृताः ॥ १ ॥

भस्मन्यथाप्लुते राम गङ्गायाः सलिलेन वै ।
सर्वलोकप्रभुर्ब्रह्मा राजानमिदमब्रवीत् ॥ २ ॥

तारिता नरशार्दूल दिवं याताश्च देववत् ।
षष्टिः पुत्रसहस्राणि सगरस्य महात्मनः ॥ ३ ॥

सागरस्य जलं लोके यावत्स्थास्यति पार्थिव ।
सगरस्यात्मजास्तावत्स्वर्गे स्थास्यन्ति देववत् ॥४॥

इयं च दुहिता ज्येष्ठा तव गङ्गा भविष्यति ।
त्वत्कृतेन च नाम्नाथ लोके स्थास्यति विश्रुता ॥

त्रीन्पथो भावयन्तीति ततस्त्रिपथगा स्मृता ।
पितामहानां सर्वेषां त्वमत्र मनुजाधिप ॥ ६ ॥

कुरुष्व सलिलं राजन्प्रतिज्ञामपवर्जय ।
पूर्वकेण हि ते राजंस्तेनातियशसा तदा ॥

धर्मिणां प्रवरेणापि नैष प्राप्तो मनोरथः ।
तथैवांशुमता तात लोकेऽप्रतिमतेजसा ॥ ८ ॥

गङ्गां प्रार्थयता नेतुं प्रतिज्ञा नापवर्जिता ।
राजर्षिणा गुणवता महर्षिसमतेजसा ॥ ९ ॥

मत्तुल्यतपसा चैव क्षत्रधर्मे स्थितेन च।
दिलीपेन महाभाग तव पित्रातितेजसा ॥ १० ॥

पुनर्न शङ्किता नेतुं गङ्गां प्रार्थयतानघ।
सा त्वया समतिक्रान्ता प्रतिज्ञा पुरुषर्षभ ॥ ११ ॥

प्राप्तोऽसि परमं लोके यशः परमसंमतम्।
यच्च गङ्गावतरणं त्वया कृतमरिंदम ॥ १२ ॥

अनेन च भवान्प्राप्तो धर्मस्यायतनं महत्।
प्लावयस्व त्वमात्मानं नरोत्तम सदोचिते ॥ १३ ॥

सलिले पुरुषव्याघ्र शुचिः पुण्यफलो भव।
पितामहानां सर्वेषां कुरुष्व सलिलक्रियाम् ॥ १४ ॥

स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकं गम्यतां नृप।
इत्येवमुक्त्वा देवेशः सर्वलोकपितामहः ॥ १५ ॥

यथागतं तथागच्छद्देवलोकं महायशाः।
भगीरथोऽपि राजर्षिः कृत्वा सलिलमुत्तमम् ॥

यथाक्रमं यथान्यायं सागराणां महायशाः।
कृतोदकः शुची राजा स्वपुरं प्रविवेश ह ॥ १७ ॥

समृद्धार्थो रघुश्रेष्ठ स्वराज्यं प्रशशास ह ।
प्रमुमोद च लोकस्तं नृपमासाद्य राघव ॥ १८ ॥

नष्टशोकः समृद्धार्थो बभूव विगतज्वरः ।
एष ते राम गङ्गाया विस्तरोऽभिहितो मया ॥

स्वस्ति प्राप्नुहि भद्रं ते संध्याकालोऽतिवर्तते ।
धन्यं यशस्यमायुष्यं पुत्र्यं स्वर्ग्यमतीव च ॥

यः श्रावयति विप्रेषु क्षत्रियेष्वितरेषु च ।
प्रीयन्ते पितरस्तस्य प्रीयन्ते दैवतानि च ॥ २१ ॥

इदमाख्यानमव्यग्रो गङ्गावतरणं शुभम् ।
यः शृणोति च काकुत्स्थ सर्वान्कामानवाप्नुयात् ।
सर्वे पापाः प्रणश्यन्ति आयुः कीर्तिश्च वर्धते ॥

इति चतुश्चत्वारिंशः सर्गः ॥

## पञ्चचत्वारिंशः सर्गः ॥

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ।
विस्मयं परमं गत्वा विश्वामित्रमथाब्रवीत् ॥ १ ॥

अत्यद्भुतमिदं ब्रह्मन्कथितं परमं त्वया ।
गङ्गावतरणं पुण्यं सागरस्यापि पूरणम् ॥ २ ॥

तस्य सा शर्वरी सर्वा सह सौमित्रिणा तदा ।
जगाम चिन्तयानस्य विश्वामित्रकथां शुभाम् ॥

ततः प्रभाते विमले विश्वामित्रं महामुनिम् ।
उवाच राघवो वाक्यं कृताह्निकमरिंदमः ॥ ४ ॥

गता भगवती रात्रिः श्रोतव्यं परमं श्रुतम् ।
क्षणभूतेव नौ रात्रिः संवृत्तेयं महातपः ॥ ५ ॥

इमां चिन्तयतः सर्वां निखिलेन कथां तव ।
तराम सरितां श्रेष्ठां पुण्यां त्रिपथगां नदीम् ॥६॥

नौरेषा हि सुखास्तीर्णा ऋषीणां पुण्यकर्मणाम्
भगवन्तमिह प्राप्तं ज्ञात्वा त्वरितमागता ॥ ७ ॥

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
संतारं कारयामास सर्षिसंघः सराघवः ॥ ८ ॥

उत्तरं तीरमासाद्य संपूज्यार्षिगणं तदा ।
गङ्गाकूले निविष्टास्ते विशालां ददृशुः पुरीम् ॥९॥

ततो मुनिवरस्तूर्णं जगाम सहराघवः ।
विशालां नगरीं रम्यां दिव्यां स्वर्गोपमां तदा ॥

अथ रामो महाप्राज्ञो विश्वामित्रं महामुनिम् ।
पप्रच्छ प्राञ्जलिर्भूत्वा विशालामुत्तमां पुरीम् ॥

कतरो राजवंशोऽयं विशालायां महामुने ।
श्रोतुमिच्छामि भद्रं ते परं कौतूहलं हि मे ॥१२॥

तस्य तद्वचनं श्रुत्वा रामस्य मुनिपुंगवः ।
आख्यातुं तत्समारेभे विशालस्य पुरातनम् ॥१३॥

श्रूयतां राम शक्रस्य कथां कथयतः शुभाम् ।
अस्मिन्देशे तु यद्वृत्तं शृणु तत्त्वेन राघव ॥ १४ ॥

पूर्वं कृतयुगे राम दितेः पुत्रा महाबलाः ।
अदितेश्च महाभाग वीर्यवन्तः सुधार्मिकाः ॥१५॥

ततस्तेषां नरव्याघ्र बुद्धिरासीन्महात्मनाम् ।
अमरा अजराश्चैव कथं स्याम निरामयाः ॥१६॥

तेषां चिन्तयतां राम बुद्धिरासीन्महात्मनाम् ।
क्षीरोदमथनं कृत्वा रसं प्राप्स्याम तत्र वै ॥१७॥

ततो निश्चित्य मथनं योक्त्रं कृत्वा च वासुकिम् ।
मन्थानं मन्दरं कृत्वा ममन्थुरमितौजस: ॥ १८ ॥

अथ दीर्घेण कालेन कालाग्निसदृशं विषम् ।
उदतिष्ठन्नरश्रेष्ठ हालाहलमिति श्रुतम् ॥ १९ ॥

सुरासुराश्च वित्रस्ता दग्धास्तेन विषाग्निना ।
शरण्यं शरणं जग्मुर्भगवन्तं महेश्वरम् ॥ २० ॥

कृत्वाल्पपिण्डं पाणिस्थं तद्विषं भगवान्हर: ।
सर्वलोकहितार्थाय भगवान्परमेश्वर: ॥ २१ ॥

कण्ठस्थमकरोत्प्राश्य लीलयामरपूजित: ।
प्रणम्य विज्वरा जग्मुर्देवदेवं वृषध्वजम् ॥ २२ ॥

मन्दरं पूर्ववत्कृत्वा ममन्थुरमितौजस: ।
तत: पर्वतमूलं तत्पाताले तु प्रवेशितम् ॥ २३ ॥

सुरासुराश्च निश्चेष्टा बभूवु: क्लेशविक्लवा: ।
देवदु:खनिवृत्त्यर्थमागत: पुरुषोत्तम: ॥ २४ ॥

भयं त्यजत भद्रं व उद्धरिष्याम्यहं तत: ।
इत्युक्त्वा कूर्मरूपेण विवेश क्षीरवारिधौ ॥ २५ ॥

मन्दरं पृष्ठतः कृत्वा वशृधे कूर्मरूपधृत् ।
सुरासुरैरनाक्रान्तमुद्गतोऽथ नरोत्तम ॥ २६ ॥

नगाग्रं पीडयामास वामहस्तेन माधवः ।
ममन्थ देवतानां च मध्ये नारायणो हरिः ॥२७॥

अथ वर्षसहस्रेण सदण्डः सकमण्डलुः ।
पूर्वं धन्वन्तरी राम अप्सराश्च सुवर्चसः ॥ २८ ॥

अप्सु निर्मथनादेव रसस्तस्माद्वरस्त्रियः ।
उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन् ॥ २९ ॥

षष्टिः कोट्योऽभवंस्तासामप्सराणां सुवर्चसाम् ।
असंख्येयास्तु काकुत्स्थ यास्तासां परिचारिकाः ॥

न ताः स्म प्रतिगृह्णन्ति सर्वे ते देवदानवाः ।
अप्रतिग्रहणात्ताश्च सर्वाः साधारणाः स्मृताः ॥

वरुणस्य ततः कन्या वारुणी रघुनन्दन ।
उत्पपात महाभागा मार्गमाणा परिग्रहम् ॥ ३२ ॥

दितेः पुत्रा न तां राम जगृहुर्वरुणात्मजाम् ।
अदितेस्तु सुता वीर जगृहुस्तामनिन्दिताम् ॥३३॥

असुरास्तेन दैतेयाः सुरास्तेनादितेः सुताः ।
हृष्टाः प्रमुदिताश्चासन्वारुणीग्रहणात्सुराः ॥ ३४ ॥

उच्चैःश्रवा हयश्रेष्ठो मणिरत्नं च कौस्तुभम् ।
उदतिष्ठन्नरश्रेष्ठ तथैवामृतमुत्तमम् । ३५ ॥

अथ तस्य कृते राम महानासीत्कुलक्षयः ।
अदितेस्तु ततः पुत्रा दितेः पुत्रानसूदयन् ॥३६।

एकतोऽभ्यागमन्सर्वे ह्यसुरा राक्षसैः सह ।
युद्धमासीन्महाघोरं वीर त्रैलोक्यमोहनम् ॥३७॥

यदा क्षयं गतं सर्वं तदा विष्णुर्महाबलः ।
अमृतं सोऽहरत्तूर्णं मायामास्थाय मोहिनीम् ॥

ये गताभिमुखं विष्णुमक्षयं पुरुषोत्तमम् ।
संपिष्टास्ते तदा युद्धे विष्णुना प्रभविष्णुना ॥३९॥

अदितेरात्मजा वीरा दितेः पुत्रान्निजघ्निरे ।
तस्मिन्युद्धे महाघोरे दैतेयादित्ययोर्भृशम् ॥ ४० ॥

निहत्य दितिपुत्रांश्च राज्यं प्राप्य पुरंदरः ।
शशास मुदितो लोकान्सर्षिसंघान्सचारणान् ॥

इति पञ्चचत्वारिंशः सर्गः ॥

## षट्चत्वारिंशः सर्गः ॥

हतेषु तेषु पुत्रेषु दितिः परमदुःखिता ।
मारीचं काश्यपं राम भर्तारमिदमब्रवीत् ॥ १ ॥

हतपुत्रास्मि भगवंस्तव पुत्रैर्महाबलैः ।
शक्रहन्तारमिच्छामि पुत्रं दीर्घतपोऽर्जितम् ॥ २ ॥

साहं तपश्चरिष्यामि गर्भं मे दातुमर्हसि ।
बलवन्तं महेष्वासं स्थितिज्ञं समदर्शिनम् ॥ ३ ॥

ईदृशं शक्रहन्तारं त्वमनुज्ञातुमर्हसि ।
तस्यास्तद्वचनं श्रुत्वा मारीचः काश्यपस्तदा ॥४॥

प्रत्युवाच महातेजा दितिं परमदुःखिताम् ।
एवं भवतु भद्रं ते शुचिर्भव तपोधने ॥ ५ ॥

जनयिष्यसि पुत्रं त्वं शक्रहन्तारमाहवे ।
पूर्णे वर्षसहस्रे तु शुचिर्यदि भविष्यसि ॥ ६ ॥

पुत्रं त्रैलोक्यभर्तारं मत्तस्त्वं जनयिष्यसि ।
एवमुक्त्वा महातेजाः पाणिना स ममार्ज ताम् ॥

समालभ्य ततः स्वस्तीत्युक्त्वा स तपसे ययौ ।
गते तस्मिन्नरश्रेष्ठ दितिः परमहर्षिता ॥ ८ ॥

कुशप्लवनमासाद्य तपस्तेपे सुदारुणम् ।
तपस्तस्यां हि कुर्वन्त्यां परिचर्यां चकार ह ॥ ९ ॥

सहस्राक्षो नरश्रेष्ठ परया गुणसंपदा ।
अग्निं कुशान्काष्ठमपः फलं मूलं तथैव च ॥१०॥

न्यवेदयत्सहस्राक्षो यच्चान्यदपि काङ्क्षितम् ।
गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा ॥ ११ ॥

शक्रः सर्वेषु कालेषु दितिं परिचचार ह ।
अथ वर्षसहस्रे तु दशोने रघुनन्दन ॥ १२ ॥

दितिः परमसंप्रीता सहस्राक्षमथाब्रवीत् ।
याचितेन सुरश्रेष्ठ तव पित्रा महात्मना ॥ १३ ॥

वरो वर्षसहस्रान्ते मम दत्तः सुतं प्रति ।
तपश्चरन्त्या वर्षाणि दश वीर्यवतां वर ॥ १४ ॥

अवशिष्टानि भद्रं ते भ्रातरं द्रक्ष्यसे ततः ।
तमहं त्वत्कृते पुत्रं समाधास्ये जयोत्सुकम् ॥

त्रैलोक्यविजयं पुत्र सह भोक्ष्यसि विज्वरः ।
एवमुक्त्वा दितिः शक्रं प्राप्ते मध्यं दिवाकरे ।।

निद्रयापहृता देवी पादौ कृत्वाथ शीर्षतः ।
दृष्ट्वा तामशुचिं शक्रः पादतः कृतमूर्धजाम् ।।१७।।

शिरःस्थाने कृतौ पादौ जहास च मुमोद च ।
तस्याः शरीरविवरं विवेश च पुरंदरः ।। १८ ।।

गर्भं च सप्तधा राम बिभेद परमात्मवान् ।
भिद्यमानस्ततो गर्भो वज्रेण शतपर्वणा ।। १९ ।।

रुरोद सुस्वरं राम ततो दितिरबुध्यत ।
मा रुदो मा रुदश्चेति गर्भं शक्रोऽभ्यभाषत ।।

बिभेद च महातेजा रुदन्तमपि वासवः ।
न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ।।

निष्पपात ततः शक्रो मातुर्वचनगौरवात् ।
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ।।

अशुचिर्देवि सुप्तासि पादयोः कृतमूर्धजा ।
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे ।। २१ ।।

अभिदं सप्तधा देवि तन्मे त्वं क्षन्तुमर्हसि ॥२३॥

इति षट्चत्वारिंशः सर्गः ॥

## सप्तचत्वारिंशः सर्गः ॥

सप्तधा तु कृते गर्भे दितिः परमदुःखिता ।
सहस्राक्षं दुराधर्षं वाक्यं सानुनयाब्रवीत् ॥ १ ॥

ममापराधाद्गर्भोऽयं सप्तधा विफलीकृतः ।
नापराधोऽस्ति देवेश तवात्र बलसूदन ॥ २ ॥

प्रियं तु कर्तुमिच्छामि मम गर्भविपर्यये ।
मरुतां सप्त सप्तानां स्थानपाला भवन्त्विमे ॥ ३ ॥

वातस्कन्धा इमे सप्त चरन्तु दिवि पुत्रक ।
मारुता इति विख्याता दिव्यरूपा ममात्मजाः ॥

ब्रह्मलोकं चरत्वेक इन्द्रलोकं तथापरः ।
दिवि वायुरिति ख्यातस्तृतीयोऽपि महायशाः ॥

चत्वारस्तु सुरश्रेष्ठ दिशो वै तव शासनात् ।
संचरिष्यन्ति भद्रं ते देवभूता ममात्मजाः ॥ ६ ॥

त्वत्कृतेनैव नाम्ना च मारुता इति विश्रुताः ।
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरंदरः ॥ ७ ॥

उवाच प्राञ्जलिर्वाक्यं दितिं बलनिषूदनः ।
सर्वमेतद्यथोक्तं ते भविष्यति न संशयः ॥ ८ ॥

विचरिष्यन्ति भद्रं ते देवभूतास्तवात्मजाः ।
एवं तौ निश्चयं कृत्वा मातापुत्रौ तपोवने ॥ ९ ॥

जग्मतुस्त्रिदिवं राम कृतार्थाविति नः श्रुतम् ।
एष देशः स काकुत्स्थ महेन्द्राध्युषितः पुरा ॥

दितिं यत्र तपःसिद्धामेवं परिचचार सः ।
इक्ष्वाकोस्तु नरव्याघ्र पुत्रः परमधार्मिकः ॥ ११ ॥

अलम्बुषायामुत्पन्नो विशाल इति विश्रुतः ।
तेन चासीदिह स्थाने विशालेति पुरी कृता ॥

विशालस्य सुतो राम हेमचन्द्रो महाबलः ।
सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरः ॥ १३ ॥

सुचन्द्रतनयो राम धूम्राश्व इति विश्रुतः ।
धूम्राश्वतनयश्चापि सृञ्जयः समपद्यत ॥ १४ ॥

सृञ्जयस्य सुतः श्रीमान्सहदेवः प्रतापवान् ।
कुशाश्वः सहदेवस्य पुत्रः परमधार्मिकः ॥ १५ ॥

कुशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ।
सोमदत्तस्य पुत्रस्तु काकुत्स्थ इति विश्रुतः ॥

तस्य पुत्रो महातेजाः संप्रत्येष पुरीमिमाम् ।
आवसत्यमरप्रख्यः सुमतिर्नाम दुर्जयः ॥ १७ ॥

इक्ष्वाकोस्तु प्रसादेन सर्वे वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ॥

इहाद्य रजनीं राम सुखं वत्स्यामहे वयम् ।
श्वः प्रभाते नरश्रेष्ठ जनकं द्रष्टुमर्हसि ॥ १९ ॥

सुमतिस्तु महातेजा विश्वामित्रमुपागतम् ।
श्रुत्वा नरवरश्रेष्ठः प्रत्युद्गच्छन्महायशाः ॥ २० ॥

पूजां च परमां कृत्वा सोपाध्यायः सबान्धवः ।
प्राञ्जलिः कुशलं पृष्ट्वा विश्वामित्रमथाब्रवीत् ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे विषयं मुनिः ।
संप्राप्तो दर्शनं चैव नास्ति धन्यतरो मया ॥२२॥

इति सप्तचत्वारिंशः सर्गः ॥

# अष्टचत्वारिंशः सर्गः ।

पृष्ट्वा तु कुशलं तत्र परस्परसमागमे ।
कथान्ते सुमतिर्वाक्यं व्याजहार महामुनिम् ॥ १ ॥

इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ।
गजसिंहगती वीरौ शार्दूलवृषभोपमौ ॥ २ ॥

पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ।
अश्विनाविव रूपेण समुपस्थितयौवनौ ॥ ३ ॥

यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥

भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ।
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ ५ ॥

किमर्थं च नरश्रेष्ठौ संप्राप्तौ दुर्गमे पथि ।
वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥ ६ ॥

तस्य तद्वचनं श्रुत्वा यथावृत्तं न्यवेदयत् ।
सिद्धाश्रमनिवासं च राक्षसानां वधं तथा ॥ ७ ॥

विश्वामित्रवचः श्रुत्वा राजा परमहर्षितः।
अतिथी परमौ प्राप्तौ पुत्रौ दशरथस्य तौ ॥ ८ ॥

पूजयामास विधिवत्सत्काराहौं महाबलौ।
ततः परमसत्कारं सुमतेः प्राप्य राघवौ ॥ ९ ॥

उष्य तत्र निशामेकां जग्मतुर्मिथिलां ततः।
तान्दृष्ट्वा मुनयः सर्वे जनकस्य पुरीं शुभाम् ॥

साधु साध्विति शंसन्तो मिथिलां समपूजयन्।
मिथिलोपवने तत्र आश्रमं दृश्य राघवः ॥ ११ ॥

पुराणं निर्जनं रम्यं पप्रच्छ मुनिपुंगवम्।
श्रीमदाश्रमसंकाशं किं न्विदं मुनिवर्जितम् ॥१२॥

श्रोतुमिच्छामि भगवन्कस्यायं पूर्व आश्रमः।
तच्छ्रुत्वा राघवेणोक्तं वाक्यं वाक्यविशारदः ॥

प्रत्युवाच महातेजा विश्वामित्रो महामुनिः।
हन्त ते कथयिष्यामि शृणु तत्त्वेन राघव ॥१४॥

यस्यैतदाश्रमपदं शप्तं कोपान्महात्मना।
गौतमस्य नरश्रेष्ठ पूर्वमासीन्महात्मनः ॥ १५ ॥

आश्रमो दिव्यसंकाशः सुरैरपि सुपूजितः ।
स चेह तप आतिष्ठदहल्यासहितः पुरा ॥ १६ ॥

वर्षपूगाननेकांश्च राजपुत्र महायशः ।
कदाचिद्दिवसे राम ततो दूरं गते मुनौ ॥ १७ ॥

तस्यान्तरं विदित्वा तु सहस्राक्षः शचीपतिः ।
मुनिवेषधरोऽहल्यामिदं वचनमब्रवीत् ॥ १८ ॥

ऋतुकालं प्रतीक्षन्ते नार्थिनः सुसमाहिते ।
संगमं त्वहमिच्छामि त्वया सह सुमध्यमे ॥१९॥

मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन ।
मतिं चकार दुर्मेधा देवराजकुतूहलात् ॥ २० ॥

अथाब्रवीत्सुरश्रेष्ठं कृतार्थेनान्तरात्मना ।
कृतार्थास्मि सुरश्रेष्ठ गच्छ शीघ्रमितः प्रभो ॥

आत्मानं मां च देवेश सर्वदा रक्ष मानद ।
इन्द्रस्तु प्रहसन्वाक्यमहल्यामिदमब्रवीत् ॥ २१ ॥

सुश्रोणि परितुष्टोऽस्मि गमिष्यामि यथागतम् ।
एवं संगम्य तु तया निश्चक्रामोटजात्ततः ॥ २२ ॥

स संभ्रमात्त्वरन्राम शङ्कितो गौतमं प्रति ।
गौतमं संददर्शाथ प्रविशन्तं महामुनिम् ॥ २४ ॥

देवदानवदुर्धर्षं तपोबलसमन्वितम् ।
तीर्थोदकपरिक्लिन्नं दीप्यमानमिवानलम् ॥ २५ ॥

गृहीतसमिधं तत्र सकुशं मुनिपुंगवम् ।
दृष्ट्वा सुरपतिस्त्रस्तो विवर्णवदनोऽभवत् ॥ २६ ॥

अथ दृष्ट्वा सहस्राक्षं मुनिवेषधरं मुनिः ।
दुर्वृत्तं वृत्तसंपन्नो रोषाद्वचनमब्रवीत् ॥ २७ ॥

मम रूपं समास्थाय कृतवानसि दुर्मते ।
अकर्तव्यमिदं तस्माद्विफलस्त्वं भविष्यसि ॥२८॥

गौतमेनैवमुक्तस्य सरोषेण महात्मना ।
पेततुर्वृषणौ भूमौ सहस्राक्षस्य तत्क्षणात् ॥ २९ ॥

तथा शप्त्वा स वै शक्रमहल्यामपि शप्तवान् ।
इह वर्षसहस्राणि बहूनि त्वं निवत्स्यसि ॥ ३० ॥

वायुभक्षा निराहारा तप्यन्ती भस्मशायिनी ।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन्निवत्स्यसि ॥

यदा चैतद्वनं घोरं रामो दशरथात्मजः ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥ १२ ॥

तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता ।
मत्सकाशे मुदा युक्ता स्वं वपुर्धारयिष्यसि ॥ १३ ॥

एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ।
इममाश्रममुत्सृज्य सिद्धचारणसेविते ।
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ॥ १४ ॥

इति अष्टचत्वारिंशः सर्गः ॥

## एकोनपञ्चाशः सर्गः ॥



अफलस्तु ततः शक्रो देवानग्निपुरोधसः ।
अब्रवीत्त्रस्तवदनः सर्षिसंघान्सचारणान् ॥ १ ॥

कुर्वता तपसो विघ्नं गौतमस्य महात्मनः ।
क्रोधमुत्पाद्य हि मया सुरकार्यमिदं कृतम् ॥

अफलोऽस्मि कृतस्तेन क्रोधात्सा च निराकृता ।
शापमोक्षेण महता तपोऽस्यापहृतं मया ॥ ३ ॥

तस्मात्सुरवराः सर्वे सर्षिसंघाः सचारणाः ।
सुरसाह्यकरं सर्वे सफलं कर्तुमर्हथ ॥ ४ ॥

शतक्रतोर्वचः श्रुत्वा देवाः साग्निपुरोगमाः ।
पितृदेवानुपेत्याहुः सर्वे सह मरुद्गणैः ॥ ५ ॥

अयं मेषः सवृषणः शक्रो ह्यवृषणः कृतः ।
मेषस्य वृषणौ गृह्य शक्रायाशु प्रयच्छत ॥ ६ ॥

अफलस्तु कृतो मेषः परां तुष्टिं प्रदास्यति ।
भवतां हर्षणार्थं च ये च दास्यन्ति मानवाः ॥

अक्षयं हि फलं तेषां यूयं दास्यथ पुष्कलम् ।
अग्नेस्तु वचनं श्रुत्वा पितृदेवाः समागताः ॥ ८ ॥

उत्पाट्य मेषवृषणौ सहस्राक्षे न्यवेशयन् ।
तदाप्रभृति काकुत्स्थ पितृदेवाः समागताः ॥ ९ ॥

अफलान्भुञ्जते मेषान्फलैस्तेषामयोजयन् ।
इन्द्रस्तु मेषवृषणस्तदाप्रभृति राघव ॥ १० ॥

गौतमस्य प्रभावेण तपसश्च महात्मनः ।
तदागच्छ महातेज आश्रमं पुण्यकर्मणः ॥ ११ ॥

ारयैनां महाभागामहल्यां देवरूपिणीम् ।
विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः ॥१२॥

विश्वामित्रं पुरस्कृत्य तमाश्रममथाविशत् ।
ददर्श च महाभागां तपसा द्योतितप्रभाम् ॥१३॥

ोकैरपि समागम्य दुर्निरीक्ष्यां सुरासुरैः ।
यत्नान्निर्मितां धात्रा दिव्यां मायामयीमिव ॥

ा तुषारावृतां साभ्रां पूर्णचन्द्रप्रभामिव ।
ध्येऽम्भसो दुराधर्षां दीप्तां सूर्यप्रभामिव ॥१५॥

मेनापि परीताङ्गीं दीप्तामग्निशिखामिव ।
ा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह ॥

याणामपि लोकानां यावद्रामस्य दर्शनम् ।
ापस्यान्तमुपागम्य तेषां दर्शनमागता ॥ १७ ॥

ाघवौ तु ततस्तस्याः पादौ जगृहतुस्तदा ।
मरन्ती गौतमवचः प्रतिजग्राह सा च तौ ॥

पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता ।
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा ॥ १९ ॥

पुष्पवृष्टिर्महत्यासीद्देवदुन्दुभिनिःस्वनैः ।
गन्धर्वाप्सरसां चापि महानासीत्समागमः ॥ २० ॥

साधु साध्विति देवास्तामहल्यां समपूजयन् ।
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम् ॥ २१ ॥

गौतमोऽपि महातेजा अहल्यासहितः सुखी ।
रामं संपूज्य विधिवत्तपस्तेपे महातपाः ॥ २२ ॥

रामोऽपि परमां पूजां गौतमस्य महामुनेः ।
सकाशाद्विधिवत्प्राप्य जगाम मिथिलां ततः ॥

इति एकोनपञ्चाशः सर्गः ॥

## पञ्चाशः सर्गः ॥

ततः प्रागुत्तरां गत्वा रामः सौमित्रिणा सह ।
विश्वामित्रं पुरस्कृत्य यज्ञवाटमुपागमत् ॥ १ ॥

रामस्तु मुनिशार्दूलमुवाच सहलक्ष्मणः ।
साध्वी यज्ञसमृद्धिर्हि जनकस्य महात्मनः ॥ २ ॥

बहूनीह सहस्राणि नानादेशनिवासिनाम् ।
ब्राह्मणानां महाभाग वेदाध्ययनशालिनाम् ॥ ३ ॥

ऋषिवाटाश्च दृश्यन्ते शकटीशतसंकुलाः ।
देशो विधीयतां ब्रह्मन्यत्र वत्स्यामहे वयम् ॥ ४ ॥

रामस्य वचनं श्रुत्वा विश्वामित्रो महामुनिः ।
निवेशमकरोद्देशे विविक्ते सलिलायुते ॥ ५ ॥

विश्वामित्रमनुप्राप्तं श्रुत्वा स नृपतिस्तदा ।
शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितम् ॥ ६ ॥

प्रत्युज्जगाम सहसा विनयेन समन्वितः ।
ऋत्विजोऽपि महात्मानस्त्वर्घ्यमादाय सत्वरम् ॥

विश्वामित्राय धर्मेण ददुर्मन्त्रपुरस्कृतम् ।
प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ॥ ८ ॥

पप्रच्छ कुशलं राज्ञो यज्ञस्य च निरामयम् ।
स तांश्चापि मुनीन्पृष्ट्वा सोपाध्यायपुरोधसः ॥९॥

यथान्यायं ततः सर्वैः समागच्छत्प्रहृष्टवत् ।
अथ राजा मुनिश्रेष्ठं कृताञ्जलिरभाषत ॥ १० ॥

आसने भगवानास्तां सहैभिर्मुनिपुंगवैः ।
जनकस्य वचः श्रुत्वा निषसाद महामुनिः ॥११॥

पुरोधा ऋत्विजश्चैव राजा च सह मन्त्रिभिः ।
आसनेषु यथान्यायमुपविष्टान्समन्ततः ॥ १२ ॥

दृष्ट्वा स नृपतिस्तत्र विश्वामित्रमथाब्रवीत् ।
अद्य यज्ञसमृद्धिर्मे सफला दैवतैः कृता ॥ १३ ॥

अद्य यज्ञफलं प्राप्तं भगवद्दर्शनान्मया ।
धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ॥

यज्ञोपसदनं ब्रह्मन्प्राप्तोऽसि मुनिभिः सह ।
द्वादशाहं तु ब्रह्मर्षे शेषमाहुर्मनीषिणः ॥ १५ ॥

ततो भागार्थिनो देवान्द्रष्टुमर्हसि कौशिक ।
इत्युक्त्वा मुनिशार्दूलं प्रहृष्टवदनस्तदा ॥ १६ ॥

पुनस्तं परिपप्रच्छ प्राञ्जलिः प्रयतो नृपः ।
इमौ कुमारौ भद्रं ते देवतुल्यपराक्रमौ ॥ १७ ॥

गजसिंहगती वीरौ शार्दूलवृषभोपमौ ।
पद्मपत्रविशालाक्षौ खड्गतूणीधनुर्धरौ ॥ १८ ॥

अश्विनाविव रूपेण समुपस्थितयौवनौ ।
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ॥ १९ ॥

कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ।
पुण्डरीकविशालाक्षौ वरायुधधरावुभौ ॥ २० ॥

बद्धगोधाङ्गुलित्राणौ खड्गवन्तौ महाद्युती ।
काकपक्षधरौ वीरौ कुमाराविव पावकी ॥ २१ ॥

रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणौ ।
प्रकाश्य कुलमस्माकं मामुद्धर्तुमिहागतौ ॥ २२ ॥

भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ।
परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ॥ २३ ॥

कस्य पुत्रौ मुनिश्रेष्ठ श्रोतुमिच्छामि तत्त्वतः ।
तस्य तद्वचनं श्रुत्वा जनकस्य महात्मनः ॥ २४ ॥

न्यवेदयन्महात्मानौ पुत्रौ दशरथस्य तौ ।
सिद्धाश्रमनिवासं च राक्षसानां वधं तथा २५॥ ॥

तथागमनमव्यग्रं विशालायाश्च दर्शनम् ।
अहल्यादर्शनं चैव गौतमेन समागमम् ॥ २६ ॥

महाधनुषि जिज्ञासां कर्तुमागमनं तथा ।
एतत्सर्वं महातेजा जनकाय महात्मने ।
निवेद्य विरराम।थ विश्वामित्रो महामुनिः ॥२७॥

इति पञ्चाशः सर्गः ॥

## एकपञ्चाशः सर्गः ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा महातेजाः शतानन्दो महातपाः ॥ १ ॥

गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसंदर्शनादेव परं विस्मयमागतः ॥ २ ॥

स तौ निषण्णौ संप्रेक्ष्य सुखासीनौ नृपात्मजौ ।
शतानन्दो मुनिश्रेष्ठं विश्वामित्रमथाब्रवीत् ॥ ३ ॥

अपि ते मुनिशार्दूल मम माता यशस्विनी ।
दर्शिता राजपुत्राय तपो दीर्घमुपागता ॥ ४ ॥

अपि रामे महातेजा मम माता यशस्विनी ।
वन्यैरुपाहरत्पूजां पूजार्हे सर्वदेहिनाम् ॥ ५ ॥

अपि रामाय कथितं यथावृत्तं पुरातनम् ।
मम मातुर्महातेजो दैवेन दुरनुष्ठितम् ॥ ६ ॥

अपि कौशिक भद्रं ते गुरुणा मम संगता ।
माता मम मुनिश्रेष्ठ रामसंदर्शनादितः ॥ ७ ॥

अपि मे गुरुणा रामः पूजितः कुशिकात्मज ।
इहागतो महातेजाः पूजां प्राप्तो महात्मनः ॥ ८ ॥

अपि शान्तेन मनसा गुरुर्मे कुशिकात्मज ।
इहागतेन रामेण प्रयतेनाभिवादितः ॥ ९ ॥

तच्छ्रुत्वा वचनं तस्य विश्वामित्रो महामुनिः ।
प्रत्युवाच शतानन्दं वाक्यज्ञो वाक्यकोविदम् ॥

नातिक्रान्तं मुनिश्रेष्ठ यत्कर्तव्यं कृतं मया ।
संगता मुनिना पत्नी भार्गवेणेव रेणुका ॥ ११ ॥

तच्छ्रुत्वा वचनं तस्य विश्वामित्रस्य धीमतः ।
शतानन्दो महातेजा रामं वचनमब्रवीत् ॥ १२ ॥

स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव।
विश्वामित्रं पुरस्कृत्य महर्षिमपराजितम्॥ १३॥

अचिन्त्यकर्मा तपसा ब्रह्मर्षिरतुलप्रभः।
विश्वामित्रो महातेजा वेत्स्येनं परमां गतिम्॥

नास्ति धन्यतरो राम त्वत्तोऽन्यो भुवि कश्चन।
गोप्ता कुशिकपुत्रस्ते येन तप्तं महत्तपः॥ १५॥

श्रूयतां चाभिधास्यामि कौशिकस्य महात्मनः।
यथा बलं यथा वृत्तं तन्मे निगदतः शृणु॥१६॥

राजाभूदेष धर्मात्मा दीर्घकालमरिंदमः।
धर्मज्ञः कृतविद्यश्च प्रजानां च हिते रतः॥ १७॥

प्रजापतिसुतश्चासीत्कुशो नाम महीपतिः।
कुशस्य पुत्रो बलवान्कुशनाभः सुधार्मिकः॥१८॥

कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः।
गाधेः पुत्रो महातेजा विश्वामित्रो महामुनिः॥

विश्वामित्रो महातेजाः पालयामास मेदिनीम्।
बहुवर्षसहस्राणि राजा राज्यमकारयत्॥ २०॥

कदाचित्तु महातेजा योजयित्वा वरूथिनीम् ।
अक्षौहिणीपरिवृतः परिचक्राम मेदिनीम् ॥ २१ ॥

नगराणि च राष्ट्राणि सरितश्च तथा गिरीन् ।
आश्रमान्क्रमशो राम विचरन्नाजगाम ह ॥ २२ ॥

वसिष्ठस्याश्रमपदं नानावृक्षलताकुलम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ २३ ॥

देवदानवगन्धर्वैः किंनरैरुपशोभितम् ।
प्रशान्तहरिणाकीर्णं द्विजसंघनिषेवितम् ॥ २४ ॥

ब्रह्मर्षिगणसंकीर्णं देवर्षिगणसेवितम् ।
तपश्चरणसंसिद्धैरग्निकल्पैर्महात्मभिः ॥ २५ ॥

सततं संकुलं श्रीमद्ब्रह्मकल्पैर्महात्मभिः ।
अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा ॥ २६ ॥

फलमूलाशनैर्दान्तैर्जितरोषैर्जितेन्द्रियैः ।
ऋषिभिर्वालखिल्यैश्च जपहोमपरायणैः ॥ २७ ॥

अन्यैर्वैखानसैश्चैव समन्तादुपशोभितम् ।
वसिष्ठस्याश्रमपदं ब्रह्मलोकमिवापरम् ।

ददर्श जयतां श्रेष्ठो विश्वामित्रो महाबलः ॥२८॥

इति एकपञ्चाशः सर्गः ॥

## द्विपञ्चाशः सर्गः ॥

स दृष्ट्वा परमप्रीतो विश्वामित्रो महाबलः ।
प्रणम्य विधिना वीरो वसिष्ठं जपतां वरम् ॥१॥

स्वागतं तव चेत्युक्तो वसिष्ठेन महात्मना ।
आसनं चास्य भगवान्वसिष्ठो व्यादिदेश ह ॥

उपविष्टाय च तदा विश्वामित्राय धीमते ।
यथान्यायं मुनिवरः फलमूलान्युपाहरत् ॥ ३ ॥

प्रतिगृह्य च तां पूजां वसिष्ठाद्राजसत्तमः ।
तपोग्निहोत्रशिष्येषु कुशलं पर्यपृच्छत ॥ ४ ॥

विश्वामित्रो महातेजा वनस्पतिगणे तथा ।
सर्वत्र कुशलं चाह वसिष्ठो राजसत्तमम् ॥ ५ ॥

सुखोपविष्टं राजानं विश्वामित्रं महातपाः ।
पप्रच्छ जपतां श्रेष्ठो वसिष्ठो ब्रह्मणः सुतः ॥ ६ ॥

कच्चित्ते कुशलं राजन्कच्चिद्धर्मेण रञ्जयन् ।
प्रजाः पालयसे वीर राजवृत्तेन धार्मिक ॥ ७ ॥

कच्चित्ते संभृता भृत्याः कच्चित्तिष्ठन्ति शासने ।
कच्चित्ते विजिताः सर्वे रिपवो रिपुसूदन ॥ ८ ॥

कच्चिद्बलेषु कोशेषु मित्रेषु च परंतप ।
कुशलं ते नरव्याघ्र पुत्रपौत्रे तवानघ ॥ ९ ॥

सर्वत्र कुशलं राजा वसिष्ठं प्रत्युदाहरत् ।
विश्वामित्रो महातेजा वसिष्ठं विनयान्वितः ॥

कृत्वोभौ सुचिरं कालं धर्मिष्ठौ ताः कथाः शुभाः ।
मुदा परमया युक्तौ प्रीयेतां तौ परस्परम् ॥ ११ ॥

ततो वसिष्ठो भगवान्कथान्ते रघुनन्दन ।
विश्वामित्रमिदं वाक्यमुवाच प्रहसन्निव ॥ १२ ॥

आतिथ्यं कर्तुमिच्छामि बलस्यास्य महाबल ।
तव चैवाप्रमेयस्य यथार्हं संप्रतीच्छ मे ॥ ११ ॥

सत्क्रियां तु भवानेतां प्रतीच्छतु मयोद्यताम्
राजा त्वमतिथिश्रेष्ठः पूजनीयः प्रयत्नतः ॥ १४ ॥

एवमुक्तो वसिष्ठेन विश्वामित्रो महामतिः ।
कृतमित्यब्रवीद्राजा पूजावाक्येन मे त्वया ॥

फलमूलेन भगवन्विद्यते यत्तवाश्रमे ।
पाद्येनाचमनीयेन भगवद्दर्शनेन च ॥ १६ ॥

सर्वथा च महाप्राज्ञ पूजार्हेण सुपूजितः ।
गमिष्यामि नमस्तेऽस्तु मैत्रेणेक्षस्व चक्षुषा ॥

एवं ब्रुवन्तं राजानं वसिष्ठः पुनरेव हि ।
न्यमन्त्रयत धर्मात्मा पुनः पुनरुदारधीः ॥ १८ ॥

बाढमित्येव गाधेयो वसिष्ठं प्रत्युवाच ह ।
यथा प्रियं भगवतस्तथास्तु मुनिसत्तम ॥ १९ ॥

एवमुक्तो महातेजा वसिष्ठो जपतां वरः ।
आजुहाव ततः प्रीतः कल्माषीं धूतकल्मषः ॥

एह्येहि शबले क्षिप्रं शृणु चापि वचो मम ।
सबलस्यास्य राजर्षेः कर्तुं व्यवसितोऽस्म्यहम् ॥

भोजनेन महार्हेण सत्कारं संविधत्स्व मे ।
यस्य यस्य यथाकामं षड्रसेष्वभिपूजितम् ॥

तत्सर्वं कामधुक्क्षिप्रमभिवर्ष कृते मम ।
रसेनान्नेन पानेन लेह्यचोष्येण संयुतम् ।
अन्नानां निचयं सर्वं सृजस्व शबले त्वर ॥ २१ ॥

इति द्विपञ्चाशः सर्गः ॥

## त्रिपञ्चाशः सर्गः ॥

एवमुक्ता वसिष्ठेन शबला शत्रुसूदन ।
विदधे कामधुक्कामान्यस्य यस्य यथेप्सितम् ॥

इक्षून्मधूंस्तथा लाजान्मैरेयांश्च वरासवान् ।
पानानि च महार्हाणि भक्ष्यांश्चोच्चावचांस्तथा ॥

उष्णाढ्यस्यौदनस्यात्र राशयः पर्वतोपमाः ।
मृष्टान्नानि च सूपांश्च दधिकुल्यास्तथैव च ॥

नानास्वादुरसानां च षड्रसानां तथैव च ।
भाजनानि सुपूर्णानि गौडानि च सहस्रशः ॥

सर्वमासीत्सुसंतुष्टं हृष्टपुष्टजनायुतम् ।
विश्वामित्रबलं राम वसिष्ठेनाभितर्पितम् ॥ ५ ॥

विश्वामित्रोऽपि राजर्षिर्हृष्टः पुष्टस्तदाभवत् ।
सान्तःपुरवरो राजा सब्राह्मणपुरोहितः ॥ ६ ॥

सामात्यो मन्त्रिसहितः सभृत्यः पूजितस्तदा ।
युक्तः परमहर्षेण वसिष्ठमिदमब्रवीत् ॥ ७ ॥

पूजितोऽहं त्वया ब्रह्मन्पूजार्हेण सुसत्कृतः ।
श्रूयतामभिधास्यामि वाक्यं वाक्यविशारद ॥ ८ ॥

गवां शतसहस्रेण दीयतां शबला मम ।
रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ॥ ९ ॥

तस्मान्मे शबलां देहि ममैषा धर्मतो द्विज ।
एवमुक्तस्तु भगवान्वसिष्ठो मुनिसत्तमः ॥ १० ॥

विश्वामित्रेण धर्मात्मा प्रत्युवाच महीपतिम् ।
नाहं शतसहस्रेण नापि कोटिशतैर्गवाम् ॥ ११ ॥

राजन्दास्यामि शबलां राशिभी रजतस्य वा ।
न परित्यागमर्हेयं मत्सकाशादरिंदम ॥ १२ ॥

शाश्वती शबला मह्यं कीर्तिरात्मवतो यथा ।
अस्यां हव्यं च कव्यं च प्राणयात्रा तथैव च ॥

आयत्तमग्निहोत्रं च बलिर्होमस्तथैव च ।
स्वाहाकारवषट्कारौ विद्याश्च विविधास्तथा ॥

आयत्तमत्र राजर्षे सर्वमेतन्न संशयः ।
सर्वस्वमेतत्सत्येन मम तुष्टिकरी सदा ॥ १५ ॥

कारणैर्बहुभी राजन्न दास्ये शबलां तव ।
वसिष्ठेनैवमुक्तस्तु विश्वामित्रोऽब्रवीत्ततः ॥ १६ ॥

संरब्धतरमत्यर्थं वाक्यं वाक्यविशारदः ।
हैरण्यकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ॥ १७ ॥

ददामि कुञ्जराणां ते सहस्राणि चतुर्दश ।
हैरण्यानां रथानां ते श्वेताश्वानां चतुर्युजाम् ॥

ददामि ते शतान्यष्टौ किङ्किणीकाविभूषितान् ।
हयानां देशजातानां कुलजानां महौजसाम् ॥

सहस्रमेकं दश च ददामि तव सुव्रत ।
नानावर्णविभक्तानां वयःस्थानां तथैव च ॥ २० ॥

ददाम्येकां गवां कोटिं शबला दीयतां मम ।
यावदिच्छसि रत्नं वा हिरण्यं वा द्विजोत्तम ॥

तावद्दास्यामि तत्सर्वं शबला दीयतां मम ।
एवमुक्तस्तु भगवान्विश्वामित्रेण धीमता ॥ २१ ॥

न दास्यामीति शबलां प्राह राजन्कथंचन ।
एतदेव हि मे रत्नमेतदेव हि मे धनम् ॥ २२ ॥

एतदेव हि सर्वस्वमेतदेव हि जीवितम् ।
दर्शश्च पूर्णमासश्च यज्ञाश्चैवाप्तदक्षिणाः ॥ २३ ॥

एतदेव हि मे राजन्विविधाश्च क्रियास्तथा ।
अदोमूलाः क्रियाः सर्वा मम राजन्न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ॥

इति त्रिपञ्चाशः सर्गः ॥

## चतुःपञ्चाशः सर्गः ॥

कामधेनुं वसिष्ठोऽपि यदा न त्यजते मुनिः ।
तदास्य शबलां राम विश्वामित्रोऽन्वकर्षत ॥ १ ॥

नीयमाना तु शबला राम राज्ञा महात्मना ।
दुःखिता चिन्तयामास रुदन्ती शोककर्शिता ॥

परित्यक्ता वसिष्ठेन किमहं सुमहात्मना ।
याहं राजभटैर्दीना ह्रियेयं भृशदुःखिता ॥ ३ ॥

किं मयापकृतं तस्य महर्षेर्भावितात्मनः ।
यन्मामनागसं भक्तामिष्टां त्यजति धार्मिकः ॥

इति सा चिन्तयित्वा तु विनिःश्वस्य पुनः पुनः ।
निर्धूय तांस्तदा भृत्याञ्शतशः शत्रुसूदन ॥ ५ ॥

जगामानिलवेगेन पादमूलं महात्मनः ।
शबला सा रुदन्ती च क्रोशन्ती चेदमब्रवीत् ॥

वसिष्ठस्याग्रतः स्थित्वा मेघदुन्दुभिराविणी ।
भगवन्किं परित्यक्ता त्वयाहं ब्रह्मणः सुत ॥ ७ ॥

यस्माद्राजभटा मां हि नयन्ते त्वत्सकाशतः ।
एवमुक्तस्तु ब्रह्मर्षिरिदं वचनमब्रवीत् ॥ ८ ॥

शोकसंतप्तहृदयां स्वसारमिव दुःखिताम् ।
न त्वां त्यजामि शबले नापि मेऽपकृतं त्वया ॥

एष त्वां नयते राजा बलान्मत्तो महाबलः।
न हि तुल्यं बलं मह्यं राजा त्वद्य विशेषतः॥

बली राजा क्षत्रियश्च पृथिव्याः पतिरेव च।
इयमक्षौहिणी पूर्णा सवाजिरथसंकुला॥ ११॥

हस्तिध्वजसमाकीर्णा तेनासौ बलवत्तरः।
एवमुक्ता वसिष्ठेन प्रत्युवाच विनीतवत्॥ १२॥

वचनं वचनज्ञा सा ब्रह्मर्षिममितप्रभम्।
न बलं क्षत्रियस्याहुर्ब्राह्मणो बलवत्तरः॥ १३॥

ब्रह्मन्ब्रह्मबलं दिव्यं क्षत्रात्तु बलवत्तरम्।
अप्रमेयबलं तुभ्यं न त्वया बलवत्तरः॥ १४॥

विश्वामित्रो महावीर्यस्तेजस्तव दुरासदम्।
नियुङ्क्ष्व मां महाभाग त्वद्ब्रह्मबलसंभृताम्॥

तस्य दर्पबलं यत्तन्नाशयामि दुरात्मनः।
इत्युक्तस्तु तया राम वसिष्ठस्तु महायशाः॥

सृजस्वेति तदोवाच बलं परबलारुजम्।
तस्य तद्वचनं श्रुत्वा सुरभिः सासृजत्तदा॥ १७॥

तस्या हुम्भारवोत्सृष्टाः पप्लवाः शतशो नृप ।
नाशयन्ति बलं सर्वे विश्वामित्रस्य पश्यतः ॥

बलं भग्नं ततो दृष्ट्वा रथेनाक्रम्य कौशिकः ।
स राजा परमक्रुद्धो रोषविस्फारितेक्षणः ॥ १९ ॥

पप्लवान्नाशयामास शस्त्रैरुच्चावचैरपि ।
विश्वामित्रार्दितान्दृष्ट्वा पप्लवाञ्शतशस्तदा ॥ २० ॥

भूय एवासृजत्कोपाच्छकान्यवनमिश्रितान् ।
तैरासीत्संवृता भूमिः शकैर्यवनमिश्रितैः ॥ २१ ॥

प्रभावद्भिर्महावीर्यैर्हेमकिंजल्कसंनिभैः ।
दीर्घासिपट्टिशधरैर्हेमवर्णाम्बरावृतैः ॥ २२ ॥

निर्दग्धं तद्बलं सर्वं प्रदीप्तैरिव पावकैः ।
ततोऽस्त्राणि महातेजा विश्वामित्रो मुमोच ह ।
तैस्तैर्यवनकाम्भोजाः पप्लवाश्चाकुलीकृताः ॥

इति चतुःपञ्चाशः सर्गः ॥

---

## पञ्चपञ्चाशः सर्गः ॥

ततस्तानाकुलान्दृष्ट्वा विश्वामित्रास्त्रमोहितान् ।
वसिष्ठश्चोदयामास कामधुक्सृज योगतः ॥ १ ॥

तस्या हुम्भारवाज्जाताः काम्भोजा रविसंनिभाः ।
ऊधसस्त्वथ संजाताः पप्लवाः शस्त्रपाणयः ॥

योनिदेशाच्च यवनाः शकृद्देशाच्छकास्तथा ।
रोमकूपेषु च म्लेच्छा हारीताः सकिरातकाः ॥

तैस्तैर्निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात् ।
सपदातिगजं साश्वं सरथं रघुनन्दन ॥ ४ ॥

दृष्ट्वा निषूदितं सैन्यं वसिष्ठेन महात्मना ।
विश्वामित्रसुतानां तु शतं नानाविधायुधम् ॥

अभ्यधावत्सुसंक्रुद्धं वसिष्ठं जपतां वरम् ।
हुंकारेणैव तान्सर्वान्ददाह भगवानृषिः ॥ ६ ॥

ते साश्वरथपादाता वसिष्ठेन महात्मना ।
भस्मीकृता मुहूर्तेन विश्वामित्रसुतास्तदा ॥ ७ ॥

दृष्ट्वा विनाशितान्पुत्रान्बलं च सुमहायशाः ।
सव्रीडश्चिन्तयाविष्टो विश्वामित्रोऽभवत्तदा ॥ ८ ॥

समुद्र इव निर्वेगो भग्नदंष्ट्र इवोरगः ।
उपरक्त इवादित्यः सद्यो निष्प्रभतां गतः ॥ ९ ॥

हतपुत्रबलो दीनो लूनपक्ष इव द्विजः ।
हतदर्पो हतोत्साहो निर्वेदं समपद्यत ॥ १० ॥

स पुत्रमेकं राज्याय पालयेति नियुज्य च ।
पृथिवीं क्षत्रधर्मेण वनमेवान्वपद्यत ॥ ११ ॥

स गत्वा हिमवत्पार्श्वे किंनरोरगसेवितम् ।
महादेवप्रसादार्थं तपस्तेपे महातपाः ॥ १२ ॥

केनचित्त्वथ कालेन देवेशो वृषभध्वजः ।
दर्शयामास वरदो विश्वामित्रं महाबलम् ॥ १३ ॥

किमर्थं तप्यसे राजन्ब्रूहि यत्ते विवक्षितम् ।
वरदोऽस्मि वरो यस्ते काङ्क्षितः सोऽभिधीयताम् ॥

एवमुक्तस्तु देवेन विश्वामित्रो महातपाः ।
प्रणिपत्य महादेवमिदं वचनमब्रवीत् ॥ १५ ॥

यदि तुष्टो महादेव धनुर्वेदो ममानघ ।
साङ्गोपाङ्गोपनिषदः सरहस्यः प्रदीयताम् ॥

यानि देवेषु चास्त्राणि दानवेषु महर्षिषु ।
गन्धर्वयक्षरक्षःसु प्रतिभान्तु ममानघ ॥ १७ ॥

तव प्रसादाद्भवतु देवदेव ममेप्सितम् ।
एवमस्त्विति देवेशो वाक्यमुक्त्वा गतस्तदा ॥

प्राप्य चास्त्राणि देवेशाद्विश्वामित्रो महाबलः ।
दर्पेण महता युक्तो दर्पपूर्णोऽभवत्तदा ॥ १९ ॥

विवर्धमानो वीर्येण समुद्र इव पर्वणि ।
हतमेव तदा मेने वसिष्ठमृषिसत्तमम् ॥ २० ॥

ततो गत्वाश्रमपदं मुमोचास्त्राणि पार्थिवः ।
यैस्तत्तपोवनं सर्वं निर्दग्धं चास्त्रतेजसा ॥ २१ ॥

उदीर्यमाणमस्त्रं तद्विश्वामित्रस्य धीमतः ।
दृष्ट्वा विप्रद्रुता भीता मुनयः शतशो दिशः ॥

वसिष्ठस्य च ये शिष्यास्तथैव मृगपक्षिणः ।
विद्रवन्ति भयाद्भीता नानादिग्भ्यः सहस्रशः ॥

वसिष्ठस्याश्रमपदं शून्यमासीन्महात्मनः ।
मुहूर्तमिव निःशब्दमासीदिरिणसंनिभम् ॥

वदतो वै वसिष्ठस्य मा भैरिति मुहुर्मुहुः ।
नाशयाम्यद्य गाधेयं नीहारमिव भास्करः ॥

एवमुक्त्वा महातेजा वसिष्ठो जपतां वरः ।
विश्वामित्रं तदा वाक्यं सरोषमिदमब्रवीत् ॥

आश्रमं चिरसंवृद्धं यद्विनाशितवानसि ।
दुराचारोऽसि यन्मूढ तस्मात्त्वं न भविष्यसि ॥

इत्युक्त्वा परमक्रुद्धो दण्डमुद्यम्य सत्वरः ।
विधूममिव कालाग्निं यमदण्डमिवापरम् ॥ २८ ॥

इति पञ्चपञ्चाशः सर्गः ॥



## षट्पञ्चाशः सर्गः ॥

एवमुक्तो वसिष्ठेन विश्वामित्रो महाबलः ।
आग्नेयमस्त्रमुत्क्षिप्य तिष्ठ तिष्ठेति चाब्रवीत् ॥

ब्रह्मदण्डं समुत्क्षिप्य कालदण्डमिवापरम् ।
वसिष्ठो भगवान्क्रोधादिदं वचनमब्रवीत् ॥ २ ॥

क्षत्रबन्धो स्थितोऽस्म्येष यद्बलं तद्विदर्शय ।
नाशयाम्यद्य ते दर्पं शस्त्रस्य तव गाधिज ॥ ३ ॥

क्व च ते क्षत्रियबलं क्व च ब्रह्मबलं महत् ।
पश्य ब्रह्मबलं दिव्यं मम क्षत्रियपांसन ॥ ४ ॥

तस्यास्त्रं गाधिपुत्रस्य घोरमाग्नेयमुद्यतम् ।
ब्रह्मदण्डेन तच्छान्तमग्नेर्वेग इवाम्भसा ॥ ५ ॥

वारुणं चैव रौद्रं च ऐन्द्रं पाशुपतं तथा ।
ऐषीकं चापि चिक्षेप कुपितो गाधिनन्दनः ॥ ६ ॥

मानवं मोहनं चैव गान्धर्वं स्वापनं तथा ।
जृम्भणं मादनं चैव संतापनविलापने ॥ ७ ॥

शोषणं दारणं चैव वज्रमस्त्रं सुदुर्जयम् ।
ब्रह्मपाशं कालपाशं वारुणं पाशमेव च ॥ ८ ॥

पैनाकास्त्रं च दयितं शुष्कार्द्रे अशनी उभे ।
दण्डास्त्रमथ पैशाचं क्रौञ्चमस्त्रं तथैव च ॥ ९ ॥

धर्मचक्रं कालचक्रं विष्णुचक्रं तथैव च ।
वायव्यं मथनं चैव अस्त्रं हयशिरस्तथा ॥ १० ॥

शक्तिद्वयं च चिक्षेप कङ्कालं मुसलं तथा ।
वैद्याधरं महास्त्रं च कालास्त्रमथ दारुणम् ॥११॥

त्रिशूलमस्त्रं घोरं च कापालमथ कङ्कणम् ।
एतान्यस्त्राणि चिक्षेप सर्वाणि रघुनन्दन ॥ १२ ॥

वसिष्ठे जपतां श्रेष्ठे तदद्भुतमिवाभवत् ।
तानि सर्वाणि दण्डेन ग्रसते ब्रह्मणः सुतः ॥१३॥

तेषु शान्तेषु ब्रह्मास्त्रं क्षिप्तवान्गाधिनन्दनः ।
तदस्त्रमुद्यतं दृष्ट्वा देवाः साग्निपुरोगमाः ॥ १४ ॥

देवर्षयश्च संभ्रान्ता गन्धर्वाः समहोरगाः ।
त्रैलोक्यमासीत्संत्रस्तं ब्रह्मास्त्रे समुदीरिते ॥ १५ ॥

तदप्यस्त्रं महाघोरं ब्राह्मं ब्राह्मेन तेजसा ।
वसिष्ठो ग्रसते सर्वं ब्रह्मदण्डेन राघव ॥ १६ ॥

ब्रह्मास्त्रं ग्रसमानस्य वसिष्ठस्य महात्मनः ।
त्रैलोक्यमोहनं रौद्रं रूपमासीत्सुदारुणम् ॥ १७ ॥

रोमकूपेषु सर्वेषु वसिष्ठस्य महात्मनः ।
मरीच्य इव निष्पेतुरग्नेर्धूमाकुलार्चिषः ॥ १८ ॥

प्राज्वलद्ब्रह्मदण्डश्च वसिष्ठस्य करोद्यतः ।
विधूम इव कालाग्निर्यमदण्ड इवापरः ॥ १९ ॥

ततोऽस्तुवन्मुनिगणा वसिष्ठं जपतां वरम् ।
अमेयं ते बलं ब्रह्मंस्तेजो धारय तेजसा ॥ २० ॥

निगृहीतस्त्वया ब्रह्मन्विश्वामित्रो महातपाः ।
प्रसीद जपतां श्रेष्ठ लोकाः सन्तु गतव्यथाः ॥

एवमुक्तो महातेजाः शमं चक्रे महातपाः ।
विश्वामित्रोऽपि निकृतो विनिःश्वस्येदमब्रवीत् ॥

धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ २३ ॥

तदेतत्समवेक्ष्याहं प्रसन्नेन्द्रियमानसः ।
तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारकम् ॥ २४ ॥

इति षट्पञ्चाशः सर्गः ॥

## सप्तपञ्चाशः सर्गः ॥

ततः संतप्तहृदयः स्मरन्निग्रहमात्मनः ।
विनिःश्वस्य विनिःश्वस्य कृतवैरो महात्मना ॥ १

स दक्षिणां दिशं गत्वा महिष्या सह राघव ।
तताप परमं घोरं विश्वामित्रो महत्तपः ॥ २ ॥

अथास्य जज्ञिरे पुत्राः सत्यधर्मपरायणाः ।
हविःष्यन्दो मधुष्यन्दो दृढनेत्रो महारथः ॥ ३ ॥

पूर्णे वर्षसहस्रे तु ब्रह्मा लोकपितामहः ।
अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम् ॥ ४ ॥

जिता राजर्षिलोकास्ते तपसा कुशिकात्मज ।
अनेन तपसा त्वां तु राजर्षिरिति विद्महे ॥ ५ ॥

एवमुक्त्वा महातेजा जगाम सह दैवतैः ।
त्रिविष्टपं ब्रह्मलोकं लोकानां परमेश्वरः ॥ ६ ॥

विश्वामित्रोऽपि तच्छ्रुत्वा ह्रिया किंचिदवाङ्मुखः ।
दुःखेन महताविष्टः समन्युरिदमब्रवीत् ॥ ७ ॥

तपश्च सुमहत्तप्तं राजर्षिरिति मां विदुः ।
देवाः सर्षिगणाः सर्वे नास्ति मन्ये तपःफलम् ॥

इति निश्चित्य मनसा भूय एव महातपाः ।
तपश्चचार काकुत्स्थ परमं परमात्मवान् ॥ ९ ॥

एतस्मिन्नेव काले तु सत्यवादी जितेन्द्रियः ।
त्रिशङ्कुरिति विख्यात इक्ष्वाकुकुलवर्धनः ॥ १० ॥

तस्य बुद्धिः समुत्पन्ना यजेयमिति राघव ।
गच्छेयं स्वशरीरेण देवानां परमां गतिम् ॥ ११ ॥

स वसिष्ठं समाहूय कथयामास चिन्तितम् ।
अशक्यमिति चाप्युक्तो वसिष्ठेन महात्मना ॥

प्रत्याख्यातो वसिष्ठेन स ययौ दक्षिणां दिशम् ।
ततस्तत्कर्मसिद्ध्यर्थं पुत्रांस्तस्य गतो नृपः ॥ १३ ॥

वासिष्ठा दीर्घतपसस्तपो यत्र हि तेपिरे ।
त्रिशङ्कुः सुमहातेजाः शतं परमभास्वरम् ॥ १४ ॥

वसिष्ठपुत्रान्ददृशे तप्यमानान्यशस्विनः ।
सोऽभिगम्य महात्मानः सर्वानेव गुरोः सुतान् ॥

अभिवाद्यानुपूर्व्येण ह्रिया किंचिदवाङ्मुखः ।
अब्रवीत्सुमहाभागान्सर्वानेव कृताञ्जलिः ॥ १६ ॥

शरणं वः प्रपद्येऽहं शरण्याञ्शरणागतः ।
प्रत्याख्यातोऽस्मि भद्रं वो वसिष्ठेन महात्मना ॥

यष्टुकामो महायज्ञं तदनुज्ञातुमर्हथ ।
गुरुपुत्रानहं सर्वान्नमस्कृत्य प्रसादये ॥ १८ ॥

शिरसा प्रणतो याचे ब्राह्मणांस्तपसि स्थितान् ।
ते मां भवन्तः सिद्ध्यर्थं याजयन्तु समाहिताः ॥

सशरीरो यथाहं हि देवलोकमवाप्नुयाम् ।
प्रत्याख्यातो वसिष्ठेन गतिमन्यां तपोधनाः ॥

गुरुपुत्रानृते सर्वान्नाहं पश्यामि कांचन ।
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः ॥

पुरोधसस्तु विद्वांसस्तारयन्ति सदा नृपान् ।
तस्मादनन्तरं सर्वे भवन्तो दैवतं मम ॥ २२ ॥

इति सप्तपञ्चाशः सर्गः ॥

## अष्टपञ्चाशः सर्गः ॥

ततस्त्रिशङ्कोर्वचनं श्रुत्वा क्रोधसमन्वितम् ।
ऋषिपुत्रशतं राम राजानमिदमब्रवीत् ॥ १ ॥

प्रत्याख्यातो हि दुर्बुद्धे गुरुणा सत्यवादिना ।
तं कथं समतिक्रम्य शाखान्तरमुपेयिवान् ॥ २ ॥

इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमो गुरुः ।
न चातिक्रमितुं शक्यं वचनं सत्यवादिनः ॥ ३ ॥

अशक्यमिति चोवाच वसिष्ठो भगवानृषिः ।
तं वयं वै समाहर्तुं क्रतुं शक्ताः कथं तव ॥ ४ ॥

बालिशस्त्वं नरश्रेष्ठ गम्यतां स्वपुरं पुनः ।
याजने भगवाञ्शक्तस्त्रैलोक्यस्यापि पार्थिव ॥

अवमानं च तत्कर्तुं तस्य शक्ष्यामहे कथम् ।
तेषां तद्वचनं श्रुत्वा क्रोधपर्याकुलाक्षरम् ॥ ६ ॥

स राजा पुनरेवैतानिदं वचनमब्रवीत् ।
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ॥

अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः ।
ऋषिपुत्रास्तु तच्छ्रुत्वा वाक्यं घोराभिसंहितम् ॥

शेपुः परमसंक्रुद्धाश्चण्डालत्वं गमिष्यसि ।
एवमुक्त्वा महात्मानो विविशुस्ते स्वमाश्रमम् ॥

अथ रात्र्यां व्यतीतायां राजा चण्डालतां गतः ।
नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः ॥ १० ॥

चित्यमाल्यानुलेपश्च आयसाभरणोऽभवत् ।
तं दृष्ट्वा मन्त्रिणः सर्वे त्यक्त्य चण्डालरूपिणम् ॥

प्राद्रवन्सहिता राम पौरा येऽस्यानुगामिनः ।
एको हि राजा काकुत्स्थ जगाम परमात्मवान् ॥

दह्यमानो दिवारात्रं विश्वामित्रं तपोधनम् ।
विश्वामित्रस्तु तं दृष्ट्वा राजानं विफलीकृतम् ॥

चण्डालरूपिणं राम मुनिः कारुण्यमागतः ।
कारुण्यात्स महातेजा वाक्यं परमधार्मिकः ॥

इदं जगाद भद्रं ते राजानं घोररूपिणम् ।
किमागमनकार्यं ते राजपुत्र महाबल ॥ १५ ॥

अयोध्याधिपते वीर शापाच्चण्डालतां गतः ।
अथ तद्वाक्यमाकर्ण्य राजा चण्डालतां गतः ॥

अब्रवीत्प्राञ्जलिर्वाक्यं वाक्यज्ञो वाक्यकोविदम् ।
प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैस्तथैव च ॥ १७॥

अनवाप्यैव तं कामं मया प्राप्तो विपर्ययः ।
सशरीरो दिवं यायामिति मे सौम्य दर्शनम् ॥

मया चेष्टं क्रतुशतं तच्च नावाप्यते फलम् ।
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ॥ १९॥

कृच्छ्रेष्वपि गतः सौम्य क्षत्रधर्मेण ते शपे ।
यज्ञैर्बहुविधैरिष्टं प्रजा धर्मेण पालिताः ॥ २० ॥

गुरवश्च महात्मानः शीलवृत्तेन तोषिताः ।
धर्मे प्रयतमानस्य यज्ञं चाहर्तुमिच्छतः ॥ २१ ॥

परितोषं न गच्छन्ति गुरवो मुनिपुंगव ।
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ २२ ॥

दैवेनाक्रम्यते सर्वं दैवं हि परमा गतिः ।
तस्य मे परमार्थस्य प्रसादमभिकाङ्क्षतः ॥ २३ ॥

कर्तुमर्हसि भद्रं ते दैवोपहतकर्मणः ।
नान्यां गतिं गमिष्यामि नान्यः शरणमस्ति मे
दैवं पुरुषकारेण निवर्तयितुमर्हसि ॥ २४ ॥

इति अष्टपञ्चाशः सर्गः ॥

## एकोनषष्टितमः सर्गः ॥

उक्तवाक्यं तु राजानं कृपया कुशिकात्मजः ।
अब्रवीन्मधुरं वाक्यं साक्षाच्चण्डालरूपिणम् ॥

ऐक्ष्वाक स्वागतं वत्स जानामि त्वां सुधार्मिकम् ।
शरणं ते भविष्यामि मा भैषीर्नृपपुंगव ॥ २ ॥

अहमामन्त्रये सर्वान्महर्षीन्पुण्यकर्मणः ।
यज्ञसाह्यकरान्राजंस्ततो यक्ष्यसि निर्वृतः ॥ ३ ॥

गुरुशापकृतं रूपं यदिदं त्वयि वर्तते ।
अनेन सह रूपेण सशरीरो गमिष्यसि ॥ ४ ॥

हस्तप्राप्तमहं मन्ये स्वर्गं तव नराधिप।
यस्त्वं कौशिकमागम्य शरण्यं शरणागतः॥

एवमुक्त्वा महातेजाः पुत्रान्परमधार्मिकान्।
व्यादिदेश महाप्राज्ञान्यज्ञसंभारकारणात्॥

सर्वाञ्शिष्यान्समाहूय वाक्यमेतदुवाच ह।
सर्वानृषिगणान्वत्सा आनयध्वं ममाज्ञया॥

सशिष्यसुहृदश्चैव सर्त्विजः सुबहुश्रुतान्।
यदन्यो वचनं ब्रूयान्मद्वाक्यबलचोदितः॥ ८ ॥

तत्सर्वमखिलेनोक्तं ममाख्येयमनादृतम्।
तस्य तद्वचनं श्रुत्वा दिशो जग्मुस्तदाज्ञया॥

आजग्मुरथ देशेभ्यः सर्वेभ्यो ब्रह्मवादिनः।
ते च शिष्याः समागम्य मुनिं ज्वलिततेजसम्॥

ऊचुश्च वचनं सर्वे सर्वेषां ब्रह्मवादिनाम्।
श्रुत्वा ते वचनं सर्वे समायान्ति द्विजातयः॥

सर्वदेशेषु चागच्छन्वर्जयित्वा महोदयम्।
वासिष्ठं तच्छतं सर्वं क्रोधपर्याकुलाक्षरम्॥

यदाह वचनं सर्वं शृणु त्वं मुनिपुंगव ।
क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ॥

कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ।
ब्राह्मणा वा महात्मानो भुक्त्वा चण्डालभोजनम् ॥

कथं स्वर्गं गमिष्यन्ति विश्वामित्रेण पालिताः ।
एतद्वचननैष्ठुर्यमूचुः संरक्तलोचनाः ॥ १५ ॥

वासिष्ठा मुनिशार्दूल सर्वे ते समहोदयाः ।
तेषां तद्वचनं श्रुत्वा सर्वेषां मुनिपुंगवः ॥ १६ ॥

क्रोधसंरक्तनयनः सरोषमिदमब्रवीत् ।
ये दूषयन्त्यदुष्टं मां तप उग्रं समास्थितम् ॥

भस्मीभूता दुरात्मानो भविष्यन्ति न संशयः ।
अद्य ते कालपाशेन नीता वैवस्वतक्षयम् ॥ १८ ॥

सप्त जातिशतान्येव मृतपाः सन्तु सर्वशः ।
श्वमांसनियताहारा मुष्टिका नाम निर्घृणाः ॥

विकृताश्च विरूपाश्च लोकाननुचरन्त्विमान् ।
महोदयश्च दुर्बुद्धिर्मामदूष्यं ह्यदूषयत् ॥ २० ॥

दूषितः सर्वलोकेषु निषादत्वं गमिष्यति ।
प्राणातिपातनिरतो निरनुक्रोशतां गतः ॥ २१ ॥

दीर्घकालं मम क्रोधाद्दुर्गतिं वर्तयिष्यति ।
एतावदुक्त्वा वचनं विश्वामित्रो महातपाः ।
विरराम महातेजा ऋषिमध्ये महामुनिः ॥ २२ ॥

इति एकोनषष्टितमः सर्गः ॥

## षष्टितमः सर्गः

तपोबलहतान्कृत्वा वासिष्ठान्समहोदयान् ।
ऋषिमध्ये महातेजा विश्वामित्रोऽभ्यभाषत ॥

अयमिक्ष्वाकुदायादस्त्रिशङ्कुरिति विश्रुतः ।
धर्मिष्ठश्च वदान्यश्च मां चैव शरणं गतः ॥ २ ॥

तेनानेन शरीरेण देवलोकजिगीषया ।
यथायं स्वशरीरेण स्वर्गलोकं गमिष्यति ॥ ३ ॥

तथा प्रवर्त्यतां यज्ञो भवद्भिश्च मया सह ।
विश्वामित्रवचः श्रुत्वा सर्वं एव महर्षयः ॥ ४ ॥

ऊचुः समेत्य सहिता धर्मज्ञा धर्मसंहितम् ।
अयं कुशिकदायादो मुनिः परमकोपनः ॥ ५ ॥

यदाह वचनं सम्यगेतत्कार्यं न संशयः ।
अग्निकल्पो हि भगवाञ्शापं दास्यति रोषितः ॥

तस्मात्प्रवर्त्यतां यज्ञः सशरीरो यथा दिवम् ।
गच्छेदिक्ष्वाकुदायादो विश्वामित्रस्य तेजसा ॥

तथा प्रवर्त्यतां यज्ञः सर्वे समधितिष्ठत ।
एवमुक्त्वा महर्षयश्चक्रुस्तास्ताः क्रियास्तदा ॥

याजकश्च महातेजा विश्वामित्रोऽभवत्क्रतौ ।
ऋत्विजश्चानुपूर्व्येण मन्त्रवन्मन्त्रकोविदाः ॥

चक्रुः सर्वाणि कर्माणि यथाकल्पं यथाविधि ।
ततः कालेन महता विश्वामित्रो महातपाः ॥

चकारावाहनं तत्र भागार्थं सर्वदेवताः ।
नाभ्यागमंस्तदाहूता भागार्थं सर्वदेवताः ॥ ११ ॥

ततः क्रोधसमाविष्टो विश्वामित्रो महामुनिः ।
स्रुवमुद्यम्य सक्रोधस्त्रिशङ्कुमिदमब्रवीत् ॥ १२ ॥

पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वर ।
एष त्वां सशरीरेण नयामि स्वर्गमोजसा ॥ १३ ॥

दुष्प्रापं स्वशरीरेण दिवं गच्छ नराधिप ।
स्वार्जितं किंचिदप्यस्ति मया हि तपसः फलम् ॥

राजन्स्वतेजसा तस्य सशरीरो दिवं व्रज ।
उक्तवाक्ये मुनौ तस्मिन्सशरीरो नरेश्वरः ॥ १५ ॥

दिवं जगाम काकुत्स्थ मुनीनां पश्यतां तदा ।
देवलोकगतं दृष्ट्वा त्रिशङ्कुं पाकशासनः ॥ १६ ॥

सह सर्वैः सुरगणैरिदं वचनमब्रवीत् ।
त्रिशङ्को गच्छ भूयस्त्वं नासि स्वर्गकृतालयः ॥

गुरुशापहतो मूढ पत भूमिमवाक्शिराः ।
एवमुक्तो महेन्द्रेण त्रिशङ्कुरपतत्पुनः ॥ १८ ॥

विक्रोशमानस्त्राहीति विश्वामित्रं तपोधनम् ।
तच्छ्रुत्वा वचनं तस्य क्रोशमानस्य कौशिकः ॥

रोषमाहारयत्तीव्रं तिष्ठ तिष्ठेति चाब्रवीत् ।
ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः ॥ २० ॥

सृजन्दक्षिणमार्गस्थान्सप्तर्षीनपरान्पुनः ।
नक्षत्रमालामपरामसृजत्क्रोधमूर्छितः ॥ २१ ॥

दक्षिणां दिशमास्थाय मुनिमध्ये महातपाः ।
सृष्ट्वा नक्षत्रवंशं च क्रोधेन कलुषीकृतः ॥ २२ ॥

अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्द्रकः ।
दैवतान्यपि स क्रोधात्स्रष्टुं समुपचक्रमे ॥ २३ ॥

ततः परमसंभ्रान्ताः सर्षिसंघाः सुरासुराः ।
सकिंनरमहायक्षाः सहसिद्धाः सचारणाः ॥ २४ ॥

विश्वामित्रं महात्मानमूचुः सानुनयं वचः ।
अयं राजा महाभाग गुरुशापपरिक्षतः ॥ २५ ॥

सशरीरो दिवं यातुं नार्हत्येव तपोधन ।
तेषां तद्वचनं श्रुत्वा देवानां मुनिपुंगवः ॥ २६ ॥

अब्रवीत्सुमहद्वाक्यं कौशिकः सर्वदेवताः ।
सशरीरस्य भद्रं वस्त्रिशङ्कोरस्य भूपतेः ॥ २७ ॥

आरोहणं प्रतिज्ञाय नानृतं कर्तुमुत्सहे ।
स्वर्गोऽस्तु सशरीरस्य त्रिशङ्कोरस्य शाश्वतः ॥

नक्षत्राणि च सर्वाणि मामकानि ध्रुवाण्यथ ।
यावल्लोका धरिष्यन्ति तिष्ठन्त्वेतानि सर्वशः ॥

मत्कृतानि सुराः सर्वे तदनुज्ञातुमर्हथ ।
एवमुक्ताः सुराः सर्वे प्रत्यूचुर्मुनिपुंगवम् ॥ १० ॥

एवं भवतु भद्रं ते तिष्ठन्त्वेतानि सर्वशः ।
गगने तान्यनेकानि वैश्वानरपथाद्बहिः ॥ ११ ॥

नक्षत्राणि मुनिश्रेष्ठ तेषु ज्योतिःषु जज्वलुः ।
अवाक्शिरास्त्रिशङ्कुश्च तिष्ठत्वमरसंनिभः ॥

अनुयास्यन्ति चैतानि ज्योतींषि नृपसत्तमम् ।
कृतार्थं कीर्तिमन्तं च स्वर्गलोकगतं तथा ॥

विश्वामित्रस्तु धर्मात्मा सर्वदेवैरभिष्टुतः ।
ऋषिभिश्च महातेजा बाढमित्याह देवताः ॥

ततो देवा महात्मानो मुनयश्च तपोधनाः ।
जग्मुर्यथागतं सर्वे यज्ञस्यान्ते नरोत्तम ॥ १५ ॥

इति षष्टितमः सर्गः ॥

# एकषष्टितमः सर्गः

विश्वामित्रो महात्माथ प्रस्थितान्प्रेक्ष्य तानृषीन् ।
अब्रवीन्नरशार्दूलः सर्वांस्तान्वनवासिनः ॥ १ ॥

महान्विघ्नः प्रवृत्तोऽयं दक्षिणामास्थितो दिशम् ।
दिशमन्यां प्रपत्स्यामस्तत्र तप्स्यामहे तपः ॥ २ ॥

पश्चिमायां विशालायां पुष्करेषु महात्मनः ।
सुखं तपश्चरिष्यामो वरं तद्धि तपोवनम् ॥ ३ ॥

एवमुक्त्वा महातेजाः पुष्करेषु महामुनिः ।
तप उग्रं दुराधर्षं तेपे मूलफलाशनः ॥ ४ ॥

एतस्मिन्नेव काले तु अयोध्याधिपतिर्नृपः ।
अम्बरीष इति ख्यातो यष्टुं समुपचक्रमे ॥ ५ ॥

तस्य वै यजमानस्य पशुमिन्द्रो जहार ह ।
प्रणष्टे तु पशौ विप्रो राजानमिदमब्रवीत् ॥ ६ ॥

पशुरद्य हृतो राजन्प्रणष्टस्तव दुर्नयात् ।
अरक्षितारं राजानं घ्नन्ति दोषा नरेश्वर ॥ ७ ॥

प्रायश्चित्तं महद्ध्येतन्नरं वा पुरुषर्षभ।
आनयस्व पशुं शीघ्रं यावत्कर्म प्रवर्तते॥ ८॥

उपाध्यायवचः श्रुत्वा स राजा पुरुषर्षभ।
अन्वियेष महाबुद्धिः पशुं गोभिः सहस्रशः॥

देशाञ्जनपदांस्तांस्तान्नगराणि वनानि च।
आश्रमाणि च पुण्यानि मार्गमाणो महीपतिः॥

स पुत्रसहितं तात सभार्यं रघुनन्दन।
भृगुपुत्रं समासीनमृचीकं संददर्श ह॥ ११॥

तमुवाच महातेजाः प्रणम्याभिवाद्य च।
ब्रह्मर्षिं तपसा दीप्तं राजर्षिरमितप्रभः॥ १२॥

पृष्ट्वा सर्वत्र कुशलमृचीकं तमिदं वचः।
गवां शतसहस्रेण विक्रीणीषे सुतं यदि॥ १३॥

पशोरर्थे महाभाग कृतकृत्योऽस्मि भार्गव।
सर्वे परिसृता देशा याज्ञीयं न लभे पशुम्॥

दातुमर्हसि मूल्येन सुतमेकमितो मम।
एवमुक्तो महातेजा ऋचीकस्त्वब्रवीद्वचः॥ १५

नाहं ज्येष्ठं नरश्रेष्ठ विक्रीणीयां कथंचन ।
ऋचीकस्य वचः श्रुत्वा तेषां माता महात्मनाम् ॥

उवाच नरशार्दूलमम्बरीषमिदं वचः ।
अविक्रेयं सुतं ज्येष्ठं भगवानाह भार्गवः ॥ १७ ॥

ममापि दयितं विद्धि कनिष्ठं शुनकं नृप ।
तस्मात्कनीयसं पुत्रं न दास्ये तव पार्थिव ॥

प्रायेण हि नरश्रेष्ठ ज्येष्ठाः पितृषु वल्लभाः ।
मातृणां च कनीयांसस्तस्माद्रक्षे कनीयसम् ॥

उक्तवाक्ये मुनौ तस्मिन्मुनिपत्न्यां तथैव च ।
शुनःशेपः स्वयं राम मध्यमो वाक्यमब्रवीत् ॥

पिता ज्येष्ठमविक्रेयं माता चाह कनीयसम् ।
विक्रीतं मध्यमं मन्ये राजन्पुत्रं नयस्व माम् ॥

गवां शतसहस्रेण शुनःशेपं नरेश्वरः ।
गृहीत्वा परमप्रीतो जगाम रघुनन्दन ॥ २२ ॥

अम्बरीषस्तु राजर्षी रथमारोप्य सत्वरः ।
शुनःशेपं महातेजा जगामाशु महायशाः ॥ २३ ॥

इति एकषष्टितमः सर्गः ॥

## द्विषष्टितमः सर्गः ॥

शुनःशेपं नरश्रेष्ठ गृहीत्वा तु महायशाः ।
व्यश्राम्यत्पुष्करे राजा मध्याह्ने रघुनन्दन ॥ १ ॥

तस्य विश्रममाणस्य शुनःशेपो महायशाः ।
पुष्करं श्रेष्ठमागम्य विश्वामित्रं ददर्श ह ॥ २ ॥

तप्यन्तमृषिभिः सार्धं मातुलं परमातुरः ।
विषण्णवदनो दीनस्तृष्णया च श्रमेण च ॥ ३ ॥

पपाताङ्के मुनौ राम वाक्यं चेदमुवाच ह ।
न मेऽस्ति माता न पिता ज्ञातयो बान्धवाः कुतः ॥

त्रातुमर्हसि मां सौम्य धर्मेण मुनिपुंगव ।
त्राता त्वं हि मुनिश्रेष्ठ सर्वेषां त्वं हि भावनः ॥

राजा च कृतकार्यः स्यादहं दीर्घायुरव्ययः ।
स्वर्गलोकमुपाश्नीयां तपस्तप्त्वा ह्यनुत्तमम् ॥ ६ ॥

त्वं मे नाथो ह्यनाथस्य भव भव्येन चेतसा ।
पितेव पुत्रं धर्मज्ञ त्रातुमर्हसि किल्बिषात् ॥ ७ ॥

तस्य तद्वचनं श्रुत्वा विश्वामित्रो महातपाः ।
सान्त्वयित्वा बहुविधं पुत्रानिदमुवाच ह ॥

यत्कृते पितरः पुत्राञ्जनयन्ति शुभार्थिनः ।
परलोकहितार्थाय तस्य कालोऽयमागतः ॥ ९ ॥

अयं मुनिसुतो बालो मत्तः शरणमिच्छति ।
अस्य जीवितमात्रेण प्रियं कुरुत पुत्रकाः ॥ १० ॥

सर्वे सुकृतकर्माणः सर्वे धर्मपरायणाः ।
पशुभूता नरेन्द्रस्य तृप्तिमग्नेः प्रयच्छत ॥ ११ ॥

नाथवांश्च शुनःशेपो यज्ञश्चाविघ्नितो भवेत् ।
देवतास्तर्पिताश्च स्युर्मम चापि कृतं वचः ॥ १२ ॥

मुनेस्तु वचनं श्रुत्वा मधुष्यन्दादयः सुताः ।
साभिमानं नरश्रेष्ठ सलीलमिदमब्रुवन् ॥ १३ ॥

कथमात्मसुतान्हित्वा त्रायसेऽन्यसुतं विभो ।
अकार्यमिव पश्यामः श्वमांसमिव भोजने ॥ १४ ॥

तेषां तद्वचनं श्रुत्वा पुत्राणां मुनिपुंगवः ।
क्रोधसंरक्तनयनो व्याहर्तुमुपचक्रमे ॥ १५ ॥

निःसाध्वसमिदं प्रोक्तं धर्मादपि विगर्हितम्।
अतिक्रम्य तु मद्वाक्यं दारुणं रोमहर्षणम्॥

श्वमांसभोजिनः सर्वे वासिष्ठा इव जातिषु।
पूर्णं वर्षसहस्रं तु पृथिव्यामनुवत्स्यथ॥ १७॥

कृत्वा शापसमायुक्तान्पुत्रान्मुनिवरस्तदा।
शुनःशेपमुवाचार्थं कृत्वा रक्षां निरामयम्॥

पवित्रपाशैरासक्तो रक्तमाल्यानुलेपनः।
वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहर॥ १९॥

इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक।
अम्बरीषस्य यज्ञेऽस्मिंस्ततः सिद्धिमवाप्स्यसि॥

शुनःशेपो गृहीत्वा तु ते गाथे सुसमाहितः।
त्वरया राजसिंहं तमम्बरीषमुवाच ह॥ २१॥

राजसिंह महासत्त्व शीघ्रं गच्छावहे सदः।
निर्वर्तयस्व राजेन्द्र दीक्षां च समुपाविश॥ २२॥

तद्वाक्यमृषिपुत्रस्य श्रुत्वा हर्षसमुत्सुकः।
जगाम नृपतिः शीघ्रं यज्ञवाटमतन्द्रितः॥ २३॥

सदस्यानुमते राजा पवित्रकृतलक्षणम् ।
पशुं रक्ताम्बरं कृत्वा यूपे तं समबन्धयत् ॥

स बद्धो वाग्भिरग्र्याभिरभितुष्टाव वै सुरौ ।
इन्द्रमिन्द्रानुजं चैव यथावन्मुनिपुत्रकः ॥ २५ ॥

ततः प्रीतः सहस्राक्षो रहस्यस्तुतितर्पितः ।
दीर्घमायुस्तदा प्रादाच्छुनःशेपाय वासवः ॥

स च राजा नरश्रेष्ठ यज्ञस्यान्तमवाप्तवान् ।
फलं बहुगुणं राम सहस्राक्षप्रसादजम् ॥ २७ ॥

विश्वामित्रोऽपि धर्मात्मा भूयस्तेपे महातपाः ।
पुष्करेषु नरश्रेष्ठ दशवर्षशतानि च ॥ २८ ॥

इति द्विषष्टितमः सर्गः ॥

## त्रिषष्टितमः सर्गः ॥

पूर्णे वर्षसहस्रे तु व्रतस्नातं महामुनिम् ।
अभ्यागच्छन्सुराः सर्वे तपःफलचिकीर्षवः ॥ १ ॥



तपसां हि महाविघ्नो विश्वामित्रमुपागतः ।

अब्रवीत्सुमहातेजा ब्रह्मा सुरुचिरं वचः।
ऋषिस्त्वमसि भद्रं ते स्वार्जितैः कर्मभिः शुभैः ॥

तमेवमुक्त्वा देवेशस्त्रिदिवं पुनरभ्यगात्।
विश्वामित्रो महातेजा भूयस्तेपे महत्तपः ॥ ३ ॥

ततः कालेन महता मेनका परमाप्सराः।
पुष्करेषु नरश्रेष्ठ स्नातुं समुपचक्रमे ॥ ४ ॥

तां ददर्श महातेजा मेनकां कुशिकात्मजः।
रूपेणाप्रतिमां तत्र विद्युतं जलदे यथा ॥ ५ ॥

कंदर्पदर्पवशगो मुनिस्तामिदमब्रवीत्।
अप्सरः स्वागतं तेऽस्तु वस चेह ममाश्रमे ॥ ६ ॥

अनुगृह्णीष्व भद्रं ते मदनेन सुमोहितम्।
इत्युक्ता सा वरारोहा तत्र वासमथाकरोत् ॥ ७ ॥

तपसो हि महाविघ्नो विश्वामित्रमुपागतः।
तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव ॥८॥

विश्वामित्राश्रमे तस्मिन्सुखेन व्यतिचक्रमुः।
अथ काले गते तस्मिन्विश्वामित्रो महामुनिः ॥९॥

सव्रीड इव संवृत्तश्चिन्ताशोकपरायणः ।
बुद्धिर्मुनेः समुत्पन्ना सामर्षा रघुनन्दन ॥ १० ॥

सर्वं सुराणां कर्मैतत्तपोपहरणं महत् ।
अहोरात्रापदेशेन गताः संवत्सरा दश ॥ ११ ॥

काममोहाभिभूतस्य विघ्नोऽयं प्रत्युपस्थितः ।
विनिःश्वसन्मुनिवरः पश्चात्तापेन दुःखितः ॥ १२ ॥

भीतामप्सरसं दृष्ट्वा वेपन्तीं प्राञ्जलिं स्थिताम् ।
मेनकां मधुरैर्वाक्यैर्विसृज्य कुशिकात्मजः ॥ १३ ॥

उत्तरं पर्वतं राम विश्वामित्रो जगाम ह ।
स कृत्वा नैष्ठिकीं बुद्धिं तमुकामो महायशाः ॥

कौशिकीतीरमासाद्य तपस्तेपे सुदारुणम् ।
तस्य वर्षसहस्राणि घोरं तप उपासतः ॥ १५ ॥

उत्तरे पर्वते राम देवतानामभूद्भयम् ।
अमन्त्रयन्समागम्य सर्वे सर्षिगणाः सुराः ॥ १६ ॥

महर्षिशब्दं लभतां साध्वयं कुशिकात्मजः ।
देवतानां वचः श्रुत्वा सर्वलोकपितामहः ॥ १७ ॥

अब्रवीन्मधुरं वाक्यं विश्वामित्रं तपोधनम्।
महर्षे स्वागतं वत्स तपसोग्रेण तोषितः॥ १८॥

महत्त्वमृषिमुख्यत्वं ददामि तव सुव्रत।
ब्रह्मणः स वचः श्रुत्वा विश्वामित्रस्तपोधनः॥

प्राञ्जलिः प्रणतो भूत्वा प्रत्युवाच पितामहम्।
ब्रह्मर्षिशब्दमतुलं स्वार्जितैः कर्मभिः शुभैः॥

यदि मे भगवानाह ततोऽहं विजितेन्द्रियः।
तमुवाच ततो ब्रह्मा न तावत्त्वं जितेन्द्रियः॥

यतस्व मुनिशार्दूल इत्युक्त्वा त्रिदिवं गतः।
विप्रस्थितेषु देवेषु विश्वामित्रो महामुनिः॥ १९॥

ऊर्ध्वबाहुर्निरालम्बो वायुभक्षोऽचरत्तपः।
घर्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः॥

शिशिरे सलिलस्थायी राज्यहानि तपोधनः।
एवं वर्षसहस्रं हि तपो घोरमुपागमत्॥ २१॥

तस्मिन्संतप्यमाने तु विश्वामित्रे महामुनौ।
संभ्रमः सुमहानासीत्सुराणां वासवस्य च॥

रम्भामप्सरसः शक्रः सह सर्वैर्मरुद्गणैः ।
उवाचात्महितं वाक्यमहितं कौशिकस्य च ॥

इति त्रिषष्टितमः सर्गः ॥

## चतुःषष्टितमः सर्गः ॥

सुरकार्यमिदं रम्भे कर्तव्यं सुमहत्त्वया ।
लोभनं कौशिकस्येह काममोहसमन्वितम् ॥ १ ॥

तथोक्ता साप्सरा राम सहस्राक्षेण धीमता ।
व्रीडिता प्राञ्जलिर्भूत्वा प्रत्युवाच सुरेश्वरम् ॥

अयं सुरपते घोरो विश्वामित्रो महामुनिः ।
क्रोधमुत्स्रुजते घोरं मयि देव न संशयः ॥ ३ ॥

ततो हि मे भयं देव प्रसादं कर्तुमर्हसि ।
एवमुक्तस्तया राम रम्भया भीतया तया ॥ ४ ॥

तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम् ।
मा भैषि रम्भे भद्रं ते कुरुष्व मम शासनम् ॥

कोकिलो हृदयग्राही माधवे रुचिरद्रुमे ।
अहं कंदर्पसहितः स्थास्यामि तव पार्श्वतः ॥ ६ ॥

त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम् ।
तमृषिं कौशिकं रम्भे भेदयस्व तपोधनम् ॥ ७ ॥

सा श्रुत्वा वचनं तस्य कृत्वा रूपमनुत्तमम् ।
लोभयामास ललिता विश्वामित्रं शुचिस्मिता ॥

कोकिलस्य स शुश्राव वल्गु व्याहरतः स्वनम् ।
संप्रहृष्टेन मनसा तत एनामुदैक्षत ॥ ९ ॥

अथ तस्य च शब्देन गीतेनाप्रतिमेन च ।
दर्शनेन च रम्भाया मुनिः संदेहमागतः ॥ १० ॥

सहस्राक्षस्य तत्कर्म विज्ञाय मुनिपुंगवः ।
रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः ॥

यन्मां लोभयसे रम्भे कामक्रोधजयैषिणम् ।
दश वर्षसहस्राणि शैली स्थास्यसि दुर्भगे ॥१२॥

ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः ।
उद्धरिष्यति रम्भे त्वां मत्क्रोधकलुषीकृताम् ॥

एवमुक्त्वा महातेजा विश्वामित्रो महामुनिः ।
अशक्नुवन्धारयितुं क्रोधं संतापमागतः ॥ १४ ॥

तस्य शापेन महता रम्भा शैली तदाभवत् ।
वचः श्रुत्वा च कंदर्पो महर्षेः स च निर्गतः ॥

कोपेन सुमहातेजास्तपोपहरणे कृते ।
इन्द्रियैरजितै राम न लेभे शान्तिमात्मनः ॥ १६ ॥

बभूवास्य मनश्चिन्ता तपोपहरणे कृते ।
नैव क्रोधं गमिष्यामि न च वक्ष्यामि किंचन ॥

अथ वा नोच्छ्वसिष्यामि संवत्सरशतान्यपि ।
अहं विशोषयिष्यामि ह्यात्मानं विजितेन्द्रियः ॥

तावद्यावद्धि मे प्राप्तं ब्राह्मण्यं तपसार्जितम् ।
अनुच्छ्वसन्नभुञ्जानस्तिष्ठेयं शाश्वतीः समाः ॥

न हि मे तप्यमानस्य क्षयं यास्यन्ति मूर्तयः ।
एवं वर्षसहस्रस्य दीक्षां स मुनिपुंगवः ।
चकाराप्रतिमां लोके प्रतिज्ञां रघुनन्दन ॥ २० ॥

इति चतुःषष्टितमः सर्गः ॥

## पञ्चषष्टितमः सर्गः ॥

अथ हैमवतीं राम दिशं त्यक्त्वा महामुनिः ।
पूर्वां दिशमनुप्राप्य तपस्तेपे सुदारुणम् ॥ १ ॥

मौनं वर्षसहस्रस्य कृत्वा व्रतमनुत्तमम् ।
चकाराप्रतिमं राम तपः परमदुष्करम् ॥ २ ॥

पूर्णे वर्षसहस्रे तु काष्ठभूतं महामुनिम् ।
विघ्नैर्बहुभिराधूतं क्रोधो नान्तरमाविशत् ॥ ३ ॥

स कृत्वा निश्चयं राम तप आतिष्ठदव्ययम् ।
तस्य वर्षसहस्रस्य व्रते पूर्णे महाव्रतः ॥ ४ ॥

भोक्तुमारब्धवानन्नं तस्मिन्काले रघूत्तम ।
इन्द्रो द्विजातिर्भूत्वा तं सिद्धमन्नमयाचत ॥ ५ ॥

तस्मै दत्त्वा तदा सिद्धं सर्वं विप्राय निश्चितः ।
निःशेषितेऽन्ने भगवानभुक्त्वैव महातपाः ॥ ६ ॥

न किंचिदवदद्विप्रं मौनव्रतमुपास्थितः ।
अथ वर्षसहस्रं वै नोच्छ्वसन्मुनिपुंगवः ॥ ७ ॥

तस्यानुच्छ्वासमानस्य मूर्ध्नि धूमो व्यजायत ।
त्रैलोक्यं येन संभ्रान्तमादीपितमिवाभवत् ॥८॥

ततो देवाः सगन्धर्वाः पन्नगोरगराक्षसाः ।
मोहितास्तेजसा तस्य तपसा मन्दरश्मयः ॥ ९ ॥

कश्मलोपहताः सर्वे पितामहमथाब्रुवन् ।
बहुभिः कारणैर्देव विश्वामित्रो महामुनिः ॥ १० ॥

लोभितः क्रोधितश्चैव तपसा चाभिवर्धते ।
न ह्यस्य वृजिनं किंचिद्दृश्यते सूक्ष्ममप्यथ ॥ ११ ॥

न दीयते यदि त्वस्य मनसा यदभीप्सितम् ।
विनाशयति त्रैलोक्यं तपसा सचराचरम् ॥ १२

व्याकुलाश्च दिशः सर्वा न च किंचित्प्रकाशते ।
सागराः क्षुभिताः सर्वे विशीर्यन्ते च पर्वताः ॥

भास्करो निष्प्रभश्चैव महर्षेस्तस्य तेजसा ।
प्रकम्पते च पृथिवी वायुर्वाति भृशाकुलः ॥१४॥

अद्य प्रतिजानीमो नास्तिको जायते जनः ।
संमूढमिव त्रैलोक्यं संप्रक्षुभितमानसम् ॥ १५ ॥

बुद्धिं न कुरुते यावन्नाशे देव महामुनिः ।
तावत्प्रसाद्यो भगवानग्निरूपो महाद्युतिः ॥ १६ ॥

कालाग्निना यथा पूर्वं त्रैलोक्यं दह्यते भृशम् ।
देवराज्यं चिकीर्षेत दीयतामस्य यन्मतम् ॥

ततः सुरगणाः सर्वे पितामहपुरोगमाः ।
विश्वामित्रं महात्मानं वाक्यं मधुरमब्रुवन् ॥

ब्रह्मर्षे स्वागतं तेऽस्तु तपसा स्म सुतोषिताः ।
ब्राह्मण्यं तपसोग्रेण प्राप्तवानसि कौशिक ॥ १९ ॥

दीर्घमायुश्च ते ब्रह्मन्ददामि समरुद्गणः ।
स्वस्ति प्राप्नुहि भद्रं ते गच्छ सौम्य यथासुखम् ॥

पितामहवचः श्रुत्वा सर्वेषां च दिवौकसाम् ।
कृत्वा प्रणामं मुदितो व्याजहार महामुनिः ॥

ब्राह्मण्यं यदि मे प्राप्तं दीर्घमायुस्तथैव च ।
ॐकारश्च वषट्कारो वेदाश्च वरयन्तु माम् ॥

क्षत्रवेदविदां श्रेष्ठो ब्रह्मवेदविदामपि ।
ब्रह्मपुत्रो वसिष्ठो मामेवं वदतु देवताः ॥ २३ ॥

यद्ययं परमः कामः कृतो यान्तु सुरर्षभाः ।
ततः प्रसादितो देवैर्वसिष्ठो जपतां वरः ॥ १४ ॥

सख्यं चकार ब्रह्मर्षिरेवमस्त्विति चाब्रवीत् ।
ब्रह्मर्षिस्त्वं न संदेहः सर्वं संपत्स्यते तव ॥

इत्युक्त्वा देवताश्चापि सर्वा जग्मुर्यथागतम् ।
विश्वामित्रोऽपि धर्मात्मा लब्ध्वा ब्राह्मण्यमुत्तमम् ॥

पूजयामास ब्रह्मर्षिं वसिष्ठं जपतां वरम् ।
कृतकामो महीं सर्वां चचार तपसि स्थितः ॥

एवं त्वनेन ब्राह्मण्यं प्राप्तं राम महात्मना ।
एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः ॥ २८ ॥

एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ।
एवमुक्त्वा महातेजा विरराम द्विजोत्तमः ॥

शतानन्दवचः श्रुत्वा रामलक्ष्मणसंनिधौ ।
जनकः प्राञ्जलिर्वाक्यमुवाच कुशिकात्मजम् ॥

धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे मुनिपुंगव ।
यज्ञं काकुत्स्थसहितः प्राप्तवानसि धार्मिक ॥

पावितोऽहं त्वया ब्रह्मन्दर्शनेन महामुने।
विश्वामित्र महाभाग ब्रह्मर्षीणां वरोत्तम ॥ १२ ॥

गुणा बहुविधाः प्राप्तास्तव संदर्शनान्मया।
विस्तरेण च ते ब्रह्मन्कीर्त्यमानं महत्तपः ॥ १३ ॥

श्रुतं मया महातेजो रामेण च महात्मना।
सदस्यैः प्राप्य च सदः श्रुतास्ते बहवो गुणाः ॥

अप्रमेयं तपस्तुभ्यमप्रमेयं च ते बलम्।
अप्रमेया गुणाश्चैव नित्यं ते कुशिकात्मज ॥

तृप्तिराश्चर्यभूतानां कथानां नास्ति मे विभो।
कर्मकालो मुनिश्रेष्ठ लम्बते रविमण्डलम् ॥ १६ ॥

श्वः प्रभाते महातेजो द्रष्टुमर्हसि मां पुनः।
स्वागतं तपतां श्रेष्ठ मामनुज्ञातुमर्हसि ॥ १७ ॥

एवमुक्तो मुनिवरः प्रशस्य पुरुषर्षभम्।
विससर्जाशु जनकं प्रीतं प्रीतमनास्तदा ॥ १८ ॥

एवमुक्त्वा मुनिश्रेष्ठं वैदेहो मिथिलाधिपः।
प्रदक्षिणं चकाराथ सोपाध्यायः सबान्धवः ॥

विश्वामित्रोऽपि धर्मात्मा सरामः सहलक्ष्मणः ।
स्ववाटमभिचक्राम पूज्यमानो महर्षिभिः ॥ ४०

इति पञ्चषष्टितमः सर्गः ॥

---

## षट्षष्टितमः सर्गः ॥

ततः प्रभाते विमले कृतकर्मा नराधिपः ।
विश्वामित्रं महात्मानमाजुहाव सराघवम् ॥ १ ॥

तमर्चयित्वा धर्मात्मा शास्त्रदृष्टेन कर्मणा ।
राघवौ च महात्मानौ तदा वाक्यमुवाच ह ॥

भगवन्स्वागतं तेऽस्तु किं करोमि तवानघ ।
भवानाज्ञापयतु मामाज्ञाप्यो भवता ह्यहम् ॥

एवमुक्तः स धर्मात्मा जनकेन महात्मना ।
प्रत्युवाच मुनिर्वीरं वाक्यं वाक्यविशारदः ॥

पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुःश्रेष्ठं यदेतत्त्वयि तिष्ठति ॥ ५ ॥

एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥ ६ ॥

एवमुक्तस्तु जनकः प्रत्युवाच महामुनिम् ।
श्रूयतामस्य धनुषो यदर्थमिह तिष्ठति ॥ ७ ॥

देवरात इति ख्यातो निमेः षष्ठो महीपतिः ।
न्यासोऽयं तस्य भगवन्हस्ते दत्तो महात्मना ॥८॥

दक्षयज्ञवधे पूर्वं धनुरायम्य वीर्यवान् ।
विध्वस्य त्रिदशान्रोषात्सलीलमिदमब्रवीत् ॥ ९ ॥

यस्माद्भागार्थिनो भागान्नाकल्पयत मे सुराः ।
वराङ्गाणि महार्हाणि धनुषा शातयामि वः ॥१०॥

ततो विमनसः सर्वे देवा वै मुनिपुंगव ।
प्रसादयन्ति देवेशं तेषां प्रीतोऽभवद्भवः ॥ ११ ॥

प्रीतियुक्तः स सर्वेषां ददौ तेषां महात्मनाम् ।
तदेतद्देवदेवस्य धनूरत्नं महात्मनः ॥ १२ ॥

न्यासभूतं तदा न्यस्तमस्माकं पूर्वके विभो ।
अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता मया ॥१३॥

क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता ।
भूतलादुत्थिता सा तु व्यवर्धत ममात्मजा ॥ १४ ॥

वीर्यशुल्केति मे कन्या स्थापितेयमयोनिजा ।
भूतलादुत्थितां तां तु वर्धमानां ममात्मजाम् ॥

वरयामासुरागम्य राजानो मुनिपुंगव ।
तेषां वरयतां कन्यां सर्वेषां पृथिवीक्षिताम् ॥ १६ ॥

वीर्यशुल्केति भगवन्न ददामि सुतामहम् ।
ततः सर्वे नृपतयः समेत्य मुनिपुंगव ॥ १७ ॥

मिथिलामभ्युपागम्य वीर्यजिज्ञासवस्तदा ।
तेषां जिज्ञासमानानां वीर्यं धनुरुपाहृतम् ॥ १८ ॥

न शेकुर्ग्रहणे तस्य धनुषस्तोलनेऽपि वा ।
तेषां वीर्यवतां वीर्यमल्पं ज्ञात्वा महामुने ॥ १९ ॥

प्रत्याख्याता नृपतयस्तन्निबोध तपोधन ।
ततः परमकोपेन राजानो मुनिपुंगव ॥ २० ॥

अरुन्धन्मिथिलां सर्वे वीर्यसंदेहमागताः ।
आत्मानमवधूतं ते विज्ञाय नृपपुंगवाः ॥ २१ ॥

रोषेण महताविष्टाः पीडयन्मिथिलां पुरीम् ।
ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ॥ २२ ॥

साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ।
ततो देवगणान्सर्वांस्तपसाहं प्रसादयम् ॥ २३ ॥

ददुश्च परमप्रीताश्चतुरङ्गबलं सुराः ।
ततो भग्ना नृपतयो हन्यमाना दिशो ययुः ॥२४॥

अवीर्या वीर्यसंदिग्धाः सामात्याः पापकारिणः ।
तदेतन्मुनिशार्दूल धनुः परमभास्वरम् ॥ २५ ॥

रामलक्ष्मणयोश्चापि दर्शयिष्यामि सुव्रत ।
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥ २६ ॥

इति षट्षष्टितमः सर्गः ॥

---

## सप्तषष्टितमः सर्गः ॥

---

जनकस्य वचः श्रुत्वा विश्वामित्रो महामुनिः ।
धनुर्दर्शय रामाय इति होवाच पार्थिवम् ॥ १ ॥

ततः स राजा जनकः सचिवान्व्यादिदेश ह ।
धनुरानीयतां दिव्यं गन्धमाल्यविभूषितम् ॥ २ ॥

जनकेन समादिष्टाः सचिवाः प्राविशन्पुरीम् ।
तद्धनुः पुरतः कृत्वा निर्जग्मुः पार्थिवाज्ञया ॥ ३ ॥

नृणां शतानि पञ्चाशद्व्यायतानां महात्मनाम् ।
मञ्जूषामष्टचक्रां तां समूहुस्ते कथंचन ॥ ४ ॥

तामादाय तु मञ्जूषामायसीं यत्र तद्धनुः ।
सुरोपमं ते जनकमूचुर्नृपतिमन्त्रिणः ॥ ५ ॥

इदं धनुर्वरं राजन्पूजितं सर्वराजभिः ।
मिथिलाधिप राजेन्द्र दर्शयस्व यदीच्छसि ॥ ६ ॥

तेषां नृपो वचः श्रुत्वा कृताञ्जलिरभाषत ।
विश्वामित्रं महात्मानं तौ चोभौ रामलक्ष्मणौ ॥

इदं धनुर्वरं ब्रह्मञ्जनकैरभिपूजितम् ।
राजभिश्च महावीर्यैरशक्तैः पूजितं तथा ॥ ८ ॥

नैतत्सुरगणाः सर्वे नासुरा न च राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिंनरमहोरगाः ॥ ९ ॥



आरोपयित्वा धर्मात्मा पूरयामास वीर्यवान् ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥

पृ०—२६५

क गतिर्मानुषाणां च धनुषोऽस्य प्रपूरणे ।
आरोपणे समायोगे वेपने तोलनेऽपि वा ॥

तदेतद्धनुषां श्रेष्ठमानीतं मुनिपुंगव ।
दर्शयैतन्महाभाग अनयो राजपुत्रयोः ॥ ११ ॥

विश्वामित्रस्तु धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥

ब्रह्मर्षेर्वचनाद्रामो यत्र तिष्ठति तद्धनुः ।
मञ्जूषां तामपावृत्य दृष्ट्वा धनुरथाब्रवीत् । १२ ॥

इदं धनुर्वरं ब्रह्मन्संस्पृशामीह पाणिना ।
यत्नवांश्च भविष्यामि तोलने पूरणेऽपि वा ॥

बाढमित्येव तं राजा मुनिश्च समभाषत ।
लीलया स धनुर्मध्ये जग्राह वचनान्मुनेः ॥

पश्यतां नृसहस्राणां बहूनां रघुनन्दनः ।
आरोपयत्स धर्मात्मा सलीलमिव तद्धनुः ॥

आरोपयित्वा धर्मात्मा पूरयामास वीर्यवान् ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥ १७ ॥

तस्य शब्दो महानासीन्निर्घातसमनिःस्वनः ।
भूमिकम्पश्च सुमहान्पर्वतस्येव दीर्यतः ॥ १८ ॥

निपेतुश्च नराः सर्वे तेन शब्देन मोहिताः ।
वर्जयित्वा मुनिवरं राजानं तौ च राघवौ ॥

प्रत्याश्वस्ते जने तस्मिन्राजा विगतसाध्वसः ।
उवाच प्राञ्जलिर्वाक्यं वाक्यज्ञो मुनिपुंगवम् ॥

भगवन्दृष्टवीर्यो मे रामो दशरथात्मजः ।
अत्यद्भुतमचिन्त्यं च न तर्कितमिदं मया ॥ २१ ॥

जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥

मम सत्या प्रतिज्ञा च वीर्यशुल्केति कौशिक ।
सीता प्राणैर्बहुमता देया रामाय मे सुता ॥

भवतोऽनुमते ब्रह्मञ्शीघ्रं गच्छन्तु मन्त्रिणः ।
मम कौशिक भद्रं ते अयोध्यां त्वरिता रथैः ॥

राजानं प्रश्रितैर्वाक्यैरानयन्तु पुरं मम ।
प्रदानं वीर्यशुल्कायाः कथयन्तु च सर्वशः ॥

मुनिगुप्तौ च काकुत्स्थौ कथयन्तु नृपाय वै।
प्रीयमाणं तु राजानमानयन्तु सुशीघ्रगाः ॥ २६ ॥

कौशिकश्च तथेत्याह राजा चाभाष्य मन्त्रिणः।
अयोध्यां प्रेषयामास धर्मात्मा कृतशासनान् ॥

इति सप्तषष्टितमः सर्गः ॥

## अष्टषष्टितमः सर्गः ॥

जनकेन समादिष्टा दूतास्ते क्लान्तवाहनाः।
त्रिरात्रमुषिता मार्गे त्वयोध्यां प्राविशन्पुरीम् ॥

राज्ञो भवनमासाद्य द्वारस्थानिदमब्रुवन्।
शीघ्रं निवेद्यतां राज्ञे दूतान्नो जनकस्य च ॥ १

इत्युक्ता द्वारपालास्ते राघवाय न्यवेदयन्।
ते राजवचनाद्दूता राजवेश्म प्रवेशिताः ॥ २ ॥

ददृशुर्देवसंकाशं वृद्धं दशरथं नृपम्।
बद्धाञ्जलिपुटाः सर्वे दूता विगतसाध्वसाः ॥

राजानं प्रणता वाक्यमब्रुवन्मधुराक्षरम् ।
मैथिलो जनको राजा साग्निहोत्रपुरस्कृतम् ॥

कुशलं चाव्ययं चैव सोपाध्यायपुरोहितम् ।
मुहुर्मुहुर्मधुरया स्नेहसंयुक्तया गिरा ॥ ६ ॥

जनकस्त्वां महाराजा पृच्छते सपुरःसरम् ।
पृष्ट्वा कुशलमव्यग्रं वैदेहो मिथिलाधिपः ॥

कौशिकानुमतो वाक्यं भवन्तमिदमब्रवीत् ।
पूर्वं प्रतिज्ञा विदिता वीर्यशुल्का ममात्मजा ॥

राजानश्च कृतामर्षा निर्वीर्या विमुखीकृताः ।
सेयं मम सुता राजन्विश्वामित्रपुरःसरैः । ९ ॥

यदृच्छया गतैर्वीरैर्निर्जिता तव पुत्रकैः ।
तच्च राजन्धनुर्दिव्यं मध्ये भग्नं महात्मना ॥

रामेण हि महाराज यज्ञान्ते जनसंसदि ।
अस्मै देया मया सीता वीर्यशुल्का महात्मने ॥

प्रतिज्ञां तर्तुमिच्छामि तदनुज्ञातुमर्हसि ।
सोपाध्यायो महाराज पुरोहितपुरःसरः ॥ १२ ॥

शीघ्रमागच्छ भद्रं ते द्रष्टुमर्हसि राघवौ ।
प्रीतिं च मम राजेन्द्र निर्वर्तयितुमर्हसि ॥ १३ ॥

पुत्रयोरुभयोरेव प्रीतिं त्वमुपलप्स्यसे ।
एवं विदेहाधिपतिर्मधुरं वाक्यमब्रवीत् ॥ १४ ॥

विश्वामित्राभ्यनुज्ञातः शतानन्दमते स्थितः ।
इत्युक्त्वा विरता दूता राजगौरवशङ्किताः ॥१५॥

दूतवाक्यं तु तच्छ्रुत्वा राजा परमहर्षितः ।
वसिष्ठं वामदेवं च मन्त्रिणोऽन्यांश्च सोऽब्रवीत् ॥

गुप्तः कुशिकपुत्रेण कौसल्यानन्दवर्धनः ।
लक्ष्मणेन सह भ्रात्रा विदेहेषु वसत्यसौ ॥ १७ ॥

दृष्टवीर्यस्तु काकुत्स्थो जनकेन महात्मना ।
संप्रदानं सुतायास्तु राघवे कर्तुमिच्छति ॥ १८ ॥

यदि वो रोचते वृत्तं जनकस्य महात्मनः ।
पुरीं गच्छामहे शीघ्रं मा भूत्कालस्य पर्ययः ॥

मन्त्रिणो बाढमित्याहुः सह सर्वैर्महर्षिभिः ।
सुप्रीतश्चाब्रवीद्राजा श्वो यात्रेति च मन्त्रिणः ॥

मन्त्रिणस्तु नरेन्द्रेण रात्रिं परमसत्कृताः ।
ऊषुः प्रमुदिताः सर्वे गुणैः सर्वैः समन्विताः ॥

इति अष्टषष्टितमः सर्गः ॥

---

## एकोनसप्ततितमः सर्गः ॥

ततो रात्र्यां व्यतीतायां सोपाध्यायः सबान्धवः ।
राजा दशरथो हृष्टः सुमन्त्रमिदमब्रवीत् ॥ १ ॥

अद्य सर्वे धनाध्यक्षा धनमादाय पुष्कलम् ।
व्रजन्त्वग्रे सुविहिता नानारत्नसमन्विताः ॥ २ ॥

चतुरङ्गबलं सर्वं शीघ्रं निर्यातु सर्वशः ।
ममाज्ञासमकालं च यानयुग्यमनुत्तमम् ॥ ३ ॥

वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ।
मार्कण्डेयः सुदीर्घायुर्ऋषिः कात्यायनस्तथा ॥ ४ ॥

एते द्विजाः प्रयान्त्वग्रे स्यन्दनं योजयस्व मे ।
यथा कालात्ययो न स्याद्दूता हि त्वरयन्ति माम् ॥

वचनात्तु नरेन्द्रस्य सा सेना चतुरङ्गिणी ।
राजानमृषिभिः सार्धं व्रजन्तं पृष्ठतोऽन्वगात् ॥

गत्वा चतुरहं मार्गं विदेहानभ्युपेयिवान् ।
राजा तु जनकः श्रीमाञ्छ्रुत्वा पूजामकल्पयत् ॥

ततो राजानमासाद्य वृद्धं दशरथं नृपम् ।
जनको मुदितो राजा हर्षं च परमं ययौ ॥ ८ ॥

उवाच च नरश्रेष्ठो नरश्रेष्ठं मुदान्वितः ।
स्वागतं ते महाराज दिष्ट्या प्राप्तोऽसि राघव ॥

पुत्रयोरुभयोः प्रीतिं लप्स्यसे वीर्यनिर्जिताम् ।
दिष्ट्या प्राप्तो महातेजा वसिष्ठो भगवानृषिः ॥

सह सर्वैर्द्विजश्रेष्ठैर्देवैरिव शतक्रतुः ।
दिष्ट्या मे निर्जिता विघ्ना दिष्ट्या मे पूजितं कुलम् ॥

राघवैः सह संबन्धाद्वीर्यश्रेष्ठैर्महात्मभिः ।
श्वः प्रभाते नरेन्द्र त्वं निर्वर्तयितुमर्हसि ॥ १२ ॥

यज्ञस्यान्ते नरश्रेष्ठ विवाहमृषिसंमतम् ।
तस्य तद्वचनं श्रुत्वा ऋषिमध्ये नराधिपः ॥ १३ ॥

वाक्यं वाक्यविदां श्रेष्ठः प्रत्युवाच महीपतिम् ।
प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ॥ १४ ॥

यथा वक्ष्यासि धर्मज्ञ तत्करिष्यामहे वयम् ।
धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः ॥ १५ ॥

श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ।
ततः सर्वे मुनिगणाः परस्परसमागमे ॥ १६ ॥

हर्षेण महता युक्तास्तां निशामवसन्सुखम् ।
राजा च राघवौ पुत्रौ निशाम्य परिहर्षितः ॥

उवास परमप्रीतो जनकेनाभिपूजितः ।
जनकोऽपि महातेजाः क्रियां धर्मेण तत्त्ववित् ।
यज्ञस्य च सुताभ्यां च कृत्वा रात्रिमुवास ह ॥

इति एकोनसप्ततितमः सर्गः ॥

## सप्ततितमः सर्गः ॥

ततः प्रभाते जनकः कृतकर्मा महर्षिभिः ।
उवाच वाक्यं वाक्यज्ञः शतानन्दं पुरोहितम् ॥

भ्राता मम महातेजा यवीयानतिधार्मिकः ।
कुशध्वज इति ख्यातः पुरीमध्यवसच्छुभाम् ॥

वार्यामलकपर्यन्तां पिबन्निक्षुमतीं नदीम् ।
सांकाश्यां पुण्यसंकाशां विमानमिव पुष्पकम् ॥

तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः ।
प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह ॥

एवमुक्ते तु वचने शतानन्दस्य संनिधौ ।
आगताः केचिदव्यग्रा जनकस्तान्समादिशत् ॥

शासनात्तु नरेन्द्रस्य प्रययुः शीघ्रवाजिभिः ।
समानेतुं नरव्याघ्रं विष्णुमिन्द्राज्ञया यथा ॥ ६ ॥

सांकाश्यां ते समागत्य ददृशुश्च कुशध्वजम् ।
न्यवेदयन्यथावृत्तं जनकस्य च चिन्तितम् ॥ ७ ॥

तद्वृत्तं नृपतिः श्रुत्वा दूतश्रेष्ठैर्महाबलैः ।
आज्ञयाथ नरेन्द्रस्य आजगाम कुशध्वजः ॥ ८ ॥

स ददर्श महात्मानं जनकं धर्मवत्सलम् ।
सोऽभिवाद्य शतानन्दं राजानं चातिधार्मिकम् ॥

राजार्हं परमं दिव्यमासनं सोऽध्यरोहत ।
उपविष्टावुभौ तौ तु भ्रातरावमितौजसौ ॥१०॥

प्रेषयामासतुर्वीरौ मन्त्रिश्रेष्ठं सुदामनम् ।
गच्छ मन्त्रिपते शीघ्रमैक्ष्वाकममितप्रभम् ॥ ११ ॥

आत्मजैः सह दुर्धर्षमानयस्व समन्त्रिणम् ।
औपकार्यं स गत्वा तु रघूणां कुलवर्धनम् ॥ १२ ॥

ददर्श शिरसा चैनमभिवाद्येदमब्रवीत् ।
अयोध्याधिपते वीर वैदेहो मिथिलाधिपः ॥

स त्वां द्रष्टुं व्यवसितः सोपाध्यायपुरोहितम् ।
मन्त्रिश्रेष्ठवचः श्रुत्वा राजा सर्षिगणस्तदा ॥

सबन्धुरगमत्तत्र जनको यत्र वर्तते ।
स राजा मन्त्रिसहितः सोपाध्यायः सबान्धवः ॥

वाक्यं वाक्यविदां श्रेष्ठो वैदेहमिदमब्रवीत् ।
विदितं ते महाराज इक्ष्वाकुकुलदैवतम् ॥ १६ ॥

वक्ता सर्वेषु कृत्येषु वसिष्ठो भगवानृषिः ।
विश्वामित्राभ्यनुज्ञातः सह सर्वैर्महर्षिभिः ॥ १७ ॥

एष वक्ष्यति धर्मात्मा वसिष्ठस्ते यथाक्रमम् ।
तूष्णींभूते दशरथे वसिष्ठो भगवानृषिः ॥ १८ ॥

उवाच वाक्यं वाक्यज्ञो वैदेहं सपुरोहितम् ।
अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ॥

तस्मान्मरीचिः संजज्ञे मरीचेः काश्यपः सुतः ।
विवस्वान्काश्यपाज्जज्ञे मनुर्वैवस्वतः स्मृतः ॥

मनुः प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ।
तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥

इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरित्येव विश्रुतः ।
कुक्षेरथात्मजः श्रीमान्विकुक्षिरुदपद्यत ॥ २२ ॥

विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् ।
बाणस्य तु महातेजा अनरण्यो महायशाः ॥

अनरण्यात्पृथुर्जज्ञे त्रिशङ्कुस्तु पृथोः सुतः ।
त्रिशङ्कोरभवत्पुत्रो दुन्धुमारो महायशाः ॥ २४ ॥

दुन्धुमारान्महातेजा युवनाश्वो महाबलः ।
युवनाश्वसुतस्त्वासीन्मांधाता पृथिवीपतिः ॥ २५ ॥

मांधातुस्तु सुतः श्रीमान्सुसंधिरुदपद्यत ।
सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् ॥ १६ ॥

यशस्वी ध्रुवसंधेस्तु भरतो नाम नामतः ।
भरतात्तु महातेजा असितो नाम जातवान् ॥ १७ ॥

यस्यैते प्रतिराजान उदपद्यन्त शत्रवः ।
हैहयास्तालजङ्घाश्च शूराश्च शशिबिन्दवः ॥ १८ ॥

तांस्तु स प्रतियुध्यन्वै युद्धे राज्यात्प्रवासितः ।
हिमवन्तमुपागम्य भार्याभ्यां सहितस्तदा ॥ १९ ॥

असितोऽल्पबलो राजा कालधर्ममुपेयिवान् ।
द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतम् ॥

एका गर्भविनाशाय सपत्न्यै सगरं ददौ ।
ततः शैलवरं रम्यं बभूवाभिरतो मुनिः ॥ ११ ॥

भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः ।
तत्र चैका महाभागा भार्गवं देववर्चसम् ॥ १२ ॥

ववन्दे पद्मपत्राक्षी काङ्क्षन्ती सुतमुत्तमम् ।
तमृषिं साभ्युपागम्य कालिन्दी चाभ्यवादयत् ॥

स तामभ्यवदद्विप्रः पुत्रेप्सुं पुत्रजन्मनि ।
तव कुक्षौ महाभागे सुपुत्रः सुमहायशाः ॥ ३४ ॥

महावीर्यो महातेजा अचिरात्संजनिष्यति ।
गरेण सहितः श्रीमान्मा शुचः कमलेक्षणे ॥

च्यवनं तु नमस्कृत्य राजपुत्री पतिव्रता ।
पतिशोकातुरा तस्मात्पुत्रं देवी व्यजायत ॥

सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।
सह तेन गरेणैव जातः स सगरोऽभवत् ॥

सगरस्यासमञ्जस्तु असमञ्जादथांशुमान् ।
दिलीपोंऽशुमतः पुत्रो दिलीपस्य भगीरथः ॥

भगीरथात्ककुत्स्थोऽभूत्ककुत्स्थस्य रघुः सुतः ।
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः ॥ ३९ ॥

कल्माषपादो ह्यभवत्तस्माज्जातश्च शङ्खणः ।
सुदर्शनः शङ्खणस्य अग्निवर्णः सुदर्शनात् ॥ ४० ॥

शीघ्रगस्त्वग्निवर्णस्य शीघ्रगस्य मरुः सुतः ।
मरोः प्रशुश्रुकस्त्वासीदम्बरीषः प्रशुश्रुकात् ॥

अम्बरीषस्य पुत्रोऽभून्नहुषः सत्यविक्रमः ।
नहुषस्य ययातिश्च नाभागस्तु ययातिजः ॥

नाभागस्य बभूवाजो अजाद्दशरथोऽभवत् ।
अस्माद्दशरथाज्जातौ भ्रातरौ रामलक्ष्मणौ ॥

आदिवंशविशुद्धानां राज्ञां परमधर्मिणाम् ।
इक्ष्वाकुकुलजातानां वीराणां सत्यवादिनाम् ॥

रामलक्ष्मणयोरर्थे त्वत्सुते वरये नृप ।
सदृशाभ्यां नरश्रेष्ठ सदृशे दातुमर्हसि ॥ ४५ ॥

इति सप्ततितमः सर्गः ॥

## एकसप्ततितमः सर्गः

एवं ब्रुवाणं जनकः प्रत्युवाच कृताञ्जलिः ।
श्रोतुमर्हसि भद्रं ते कुलं नः कीर्तितं परम् ॥ १

प्रदाने हि मुनिश्रेष्ठ कुलं निरवशेषतः ।
वक्तव्यं कुलजातेन तन्निबोध महामुने ॥ २ ॥

राजाभूत्त्रिषु लोकेषु विश्रुतः स्वेन कर्मणा।
निमिः परमधर्मात्मा सर्वसत्त्ववतां वरः॥ ३॥

तस्य पुत्रो मिथिर्नाम प्रथमो मिथिपुत्रकः।
प्रथमाज्जनको राजा जनकादप्युदावसुः॥ ४॥

उदावसोस्तु धर्मात्मा जातो वै नन्दिवर्धनः।
नन्दिवर्धनपुत्रस्तु सुकेतुर्नाम नामतः॥ ५॥

सुकेतोरपि धर्मात्मा देवरातो महाबलः।
देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः॥ ६॥

बृहद्रथस्य शूरोऽभून्महावीरः प्रतापवान्।
महावीरस्य धृतिमान्सुधृतिः सत्यविक्रमः॥ ७॥

सुधृतेरपि धर्मात्मा धृष्टकेतुः सुधार्मिकः।
धृष्टकेतोस्तु राजर्षेर्हर्यश्व इति विश्रुतः॥ ८॥

हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतिन्धकः।
प्रतिन्धकस्य धर्मात्मा राजा कीर्त्तिरथः सुतः॥

पुत्रः कीर्त्तिरथस्यापि देवमीढ इति स्मृतः।
देवमीढस्य विबुधो विबुधस्य महीध्रकः॥ १०॥

महीध्रकसुतो राजा कीर्त्तिरातो महाबलः ।
कीर्त्तिरातस्य राजर्षेर्महारोमा व्यजायत ॥ ११ ॥

महारोम्णस्तु धर्मात्मा स्वर्णरोमा व्यजायत ।
स्वर्णरोम्णस्तु राजर्षेर्ह्रस्वरोमा व्यजायत ॥ १२ ॥

तस्य पुत्रद्वयं जज्ञे धर्मज्ञस्य महात्मनः ।
ज्येष्ठोऽहमनुजो भ्राता मम वीरः कुशध्वजः ॥

मां तु ज्येष्ठं पिता राज्ये सोऽभिषिच्य नराधिपः ।
कुशध्वजं समावेश्य भारं मयि वनं गतः ॥१४॥

वृद्धे पितरि स्वर्याते धर्मेण धुरमावहम् ।
भ्रातरं देवसंकाशं स्नेहात्पश्यन्कुशध्वजम् ॥१५॥

कस्यचित्त्वथ कालस्य सांकाश्यादगमत्पुरात् ।
सुधन्वा वीर्यवान्राजा मिथिलामवरोधकः ॥१६॥

स च मे प्रेषयामास शैवं धनुरनुत्तमम् ।
सीता कन्या च पद्माक्षी मह्यं वै दीयतामिति ॥

तस्याप्रदानाद्ब्रह्मर्षे युद्धमासीन्मया सह ।
स हतोऽभिमुखो राजा सुधन्वा तु मया रणे ॥

निहत्य तं मुनिश्रेष्ठ सुधन्वानं नराधिपम्।
सांकाश्ये भ्रातरं वीरमभ्यषिञ्चं कुशध्वजम्॥
कनीयानेष मे भ्राता अहं ज्येष्ठो महामुने।
ददामि परमप्रीतो वध्वौ ते मुनिपुंगव॥ २०॥
सीतां रामाय भद्रं ते ऊर्मिलां लक्ष्मणाय च।
वीर्यशुल्कां मम सुतां सीतां सुरसुतोपमाम्॥
द्वितीयामूर्मिलां चैव त्रिर्ददामि न संशयः।
रामलक्ष्मणयो राजन्गोदानं कारयस्व ह॥ २१॥
पितृकार्यं च भद्रं ते ततो वैवाहिकं कुरु।
मघा ह्यद्य महाबाहो तृतीये दिवसे विभो॥२२॥
फल्गुन्यामुत्तरे राजंस्तस्मिन्वैवाहिकं कुरु।
रामलक्ष्मणयो राजन्दानं कार्यं सुखोदयम्॥२३॥

इति एकसप्ततितमः सर्गः॥

## द्विसप्ततितमः सर्गः॥

तमुक्तवन्तं वैदेहं विश्वामित्रो महामुनिः।
उवाच वचनं वीरं वसिष्ठसहितो नृपम्॥ १॥

अचिन्त्यान्यप्रमेयाणि कुलानि नरपुंगव ।
इक्ष्वाकूणां विदेहानां नैषां तुल्योऽस्ति कश्चन ॥

सदृशो धर्मसंबन्धः सदृशो रूपसंपदा ।
रामलक्ष्मणयो राजन्सीता चोर्मिलया सह ॥ ३ ॥

वक्तव्यं च नरश्रेष्ठ श्रूयतां वचनं मम ।
भ्राता यवीयान्धर्मज्ञ एष राजा कुशध्वजः ॥ ४ ॥

अस्य धर्मात्मनो राजन्रूपेणाप्रतिमं भुवि ।
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥ ५ ॥

भरतस्य कुमारस्य शत्रुघ्नस्य च धीमतः ।
वरयेम सुते राजंस्तयोरर्थे महात्मनोः ॥ ६ ॥

पुत्रा दशरथस्येमे रूपयौवनशालिनः ।
लोकपालोपमाः सर्वे देवतुल्यपराक्रमाः ॥ ७ ॥

उभयोरपि राजेन्द्र संबन्धो ह्यनुबध्यताम् ।
इक्ष्वाकोः कुलमव्यग्रं भवतः पुण्यकर्मणः ॥ ८ ॥

विश्वामित्रवचः श्रुत्वा वसिष्ठस्य मते तदा ।
जनकः प्राञ्जलिर्वाक्यमुवाच मुनिपुंगवौ ॥ ९ ॥

कुलं धन्यमिदं मन्ये येषां नो मुनिपुंगवौ ।
सदृशं कुलसंबन्धं यदाज्ञापयथः स्वयम् ।। १० ।।

एवं भवतु भद्रं नः कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥ ११ ॥

एकाह्ना राजपुत्रीणां चतसृणां महामुने ।
पाणीन्गृह्णन्तु चत्वारो राजपुत्रा महाबलाः ॥१२॥

उत्तरे दिवसे ब्रह्मन्फल्गुनीभ्यां मनीषिणः ।
वैवाहिकं प्रशंसन्ति भगो यत्र प्रजापतिः ॥१३॥

एवमुक्त्वा वचः सौम्यं प्रत्युत्थाय कृताञ्जलिः ।
उभौ मुनिवरौ राजा जनको वाक्यमब्रवीत् ॥

परो धर्मः कृतो मह्यं शिष्योऽस्मि भवतोः सदा ।
इमान्यासनमुख्यानि आसातां मुनिपुंगवौ ॥१५॥

यथा दशरथस्येयं तथायोध्या पुरी मम ।
प्रभुत्वे नास्ति संदेहो यथार्हं कर्तुमर्हथ ॥ १६ ॥

तथा ब्रुवति वैदेहे जनके रघुनन्दनः ।
राजा दशरथो हृष्टः प्रत्युवाच महीपतिम् ॥१७॥

युवामसंख्येयगुणौ भ्रातरौ मिथिलेश्वरौ ।
ऋषयो राजसंघाश्च भवद्भ्यामभिपूजिताः ॥ १८ ॥

स्वस्ति प्राप्नुहि भद्रं ते गमिष्यामि स्वमालयम् ।
श्राद्धकर्माणि सर्वाणि विधास्यामीति चाब्रवीत् ॥

तमापृष्ट्वा नरपतिं राजा दशरथस्तदा ।
मुनीन्द्रौ तौ पुरस्कृत्य जगामाशु महायशाः ॥

स गत्वा निलयं राजा श्राद्धं कृत्वा विधानतः ।
प्रभाते काल्यमुत्थाय चक्रे गोदानमुत्तमम् ॥

गवां शतसहस्राणि ब्राह्मणेभ्यो नराधिपः ।
एकैकशो ददौ राजा पुत्रानुद्दिश्य धर्मतः ॥ २२ ॥

सुवर्णशृङ्गाः संपन्नाः सवत्साः कांस्यदोहनाः ।
गवां शतसहस्राणि चत्वारि पुरुषर्षभः ॥ २३ ॥

वित्तमन्यच्च सुबहु द्विजेभ्यो रघुनन्दनः ।
ददौ गोदानमुद्दिश्य पुत्राणां पुत्रवत्सलः ॥ २४ ॥

स सुतैः कृतगोदानैर्वृतस्तु नृपतिस्तदा ।
लोकपालैरिवाभाति वृतः सौम्यः प्रजापतिः ॥

इति द्विसप्ततितमः सर्गः ॥

# त्रिसप्ततितमः सर्गः ॥

यस्मिंस्तु दिवसे राजा चक्रे गोदानमुत्तमम् ।
तस्मिंस्तु दिवसे शूरो युधाजित्समुपेयिवान् ॥ १ ॥

पुत्रः केकयराजस्य साक्षाद्भरतमातुलः ।
दृष्ट्वा पृष्ट्वा च कुशलं राजानमिदमब्रवीत् ॥ २ ॥

केकयाधिपती राजा स्नेहात्कुशलमब्रवीत् ।
येषां कुशलकामोऽसि तेषां संप्रत्यनामयम् ॥ ३ ॥

स्वस्रीयं मम राजेन्द्र द्रष्टुकामो महीपतिः ।
तदर्थमुपयातोऽहमयोध्यां रघुनन्दन ॥ ४ ॥

श्रुत्वा त्वहमयोध्यायां विवाहार्थं तवात्मजान् ।
मिथिलामुपयातांस्तु त्वया सह महीपते ॥ ५ ॥

त्वरयाभ्युपयातोऽहं द्रष्टुकामः स्वयंवरम् ।
अथ राजा दशरथः प्रियातिथिमुपस्थितम् ॥ ६ ॥

दृष्ट्वा परमसत्कारैः पूजनार्हमपूजयत् ।
ततस्तामुषितो रात्रिं सह पुत्रैर्महात्मभिः ॥ ७ ॥

प्रभाते पुनरुत्थाय कृत्वा कर्माणि कर्मवित् ।
ऋषींस्तदा पुरस्कृत्य यज्ञवाटमुपागमत् ॥ ८ ॥

युक्ते मुहूर्ते विजये सर्वाभरणभूषितैः ।
भ्रातृभिः सहितो रामः कृतकौतुकमङ्गलः ॥ ९ ॥

वसिष्ठं पुरतः कृत्वा महर्षीनपरानपि ।
पितुः समीपमाश्रित्य तस्थौ भ्रातृभिरावृतः ।
वसिष्ठो भगवानेत्य वैदेहमिदमब्रवीत् ॥ १० ॥

राजा दशरथो राजन्कृतकौतुकमङ्गलैः ।
पुत्रैर्नरवरश्रेष्ठ दातारमभिकाङ्क्षते ॥ ११ ॥

दातृप्रतिगृहीतृभ्यां सर्वार्थाः प्रभवन्ति हि ।
स्वधर्मं प्रतिपद्यस्व कृत्वा वैवाह्यमुत्तमम् ॥ १२ ॥

इत्युक्तः परमोदारो वसिष्ठेन महात्मना ।
प्रत्युवाच महातेजा वाक्यं परमधर्मवित् ॥ १३ ॥

कः स्थितः प्रतिहारो मे कस्याज्ञा संप्रतीक्ष्यते ।
स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ॥

कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ।
मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेर्यथार्चिषः ॥

सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ।
अविघ्नं क्रियतां राजन्किमर्थमवलम्ब्यते ॥ १६ ॥

तद्वाक्यं जनकेनोक्तं श्रुत्वा दशरथस्तदा ।
प्रवेशयामास सुतान्सर्वानृषिगणानपि ॥ १७ ॥

ततो राजा विदेहानां वसिष्ठमिदमब्रवीत् ।
कारयस्व ऋषे सर्वमृषिभिः सह धार्मिकैः ॥

रामस्य लोकरामस्य क्रियां वैवाहिकीं प्रभो ।
तथेत्युक्त्वा तु जनकं वसिष्ठो भगवानृषिः ॥

विश्वामित्रं पुरस्कृत्य शतानन्दं च धार्मिकम् ।
प्रपामध्ये तु विधिवद्वेदिं कृत्वा महातपाः ॥

अलंचकार तां वेदिं गन्धपुष्पैः समन्ततः ।
सुवर्णपालिकाभिश्च च्छिद्रकुम्भैश्च साङ्कुरैः ॥

अङ्कुराढ्यैः शरावैश्च धूपपात्रैः सधूपकैः ।
शङ्खपात्रैः स्रुवैः स्रुग्भिः पात्रैरर्घ्याभिपूरितैः ॥

लाजपूर्णैश्च पात्रीभिरक्षतैरपि संस्कृतैः ।
दर्भैः समैः समास्तीर्य विधिवन्मन्त्रपूर्वकम् ॥

अग्निमादाय वेद्यां तु विधिमन्त्रपुरस्कृतम् ।
जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः ॥

ततः सुतां समानीय सर्वाभरणभूषिताम् ।
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ॥

अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ।
इयं सीता मम सुता सहधर्मचरी तव ॥ २६

प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना।
पतिव्रता महाभागा च्छायेवानुगता सदा ॥

इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ।
साधु साध्विति देवानामृषीणां वदतां तदा ।

देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ।
एवं दत्त्वा सुतां सीतां मन्त्रोदकपुरस्कृताम्

अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ।
लक्ष्मणागच्छ भद्रं ते ऊर्मिलां च ममात्मजाम्

प्रतीच्छ पाणिं गृह्णीष्व मा भूत्कालस्य पर्ययः ।
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ॥

पाणिं गृह्णीष्व माण्डव्याः पाणिना रघुनन्दन ।
शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ॥

श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना ।
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ॥

पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः ।
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ॥

चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ।
अग्निं प्रदक्षिणं कृत्वा वेदिं राजानमेव च ॥

ऋषींश्चैव महात्मानः सभार्या रघुसत्तमाः ।
यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ॥

काकुत्स्थैश्च गृहीतेषु ललितेषु च पाणिषु ।
पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ॥

दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः ।
ननृतुश्चाप्सरःसंघा गन्धर्वाश्च जगुः कलम् ॥

विवाहे रघुमुख्याणां तदद्भुतमदृश्यत ।
ईदृशे वर्तमाने तु तूर्योद्धुष्टनिनादिते ।
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या रघूत्तमाः ॥

अथोपकार्यां जग्मुस्ते सदारा रघुनन्दनाः ।
राजाप्यनुययौ पश्यन्सर्षिसंघः सबान्धवः ॥

इति त्रिसप्ततितमः सर्गः ॥

## चतुःसप्ततितमः सर्गः ॥

अथ रात्र्यां व्यतीतायां विश्वामित्रो महामुनिः ।
आपृच्छ्य तौ च राजानौ जगामोत्तरपर्वतम् ॥

आशीर्भिः पूरयित्वा च कुमारांश्च सराघवान् ।
विश्वामित्रे गते राजा वैदेहं मिथिलाधिपम् ॥

आपृच्छयाथ जगामाशु राजा दशरथः पुरीम्।
गच्छन्तं तं तु राजानमन्वगच्छन्नराधिपः॥ ३॥

अथ राजा विदेहानां ददौ कन्याधनं बहु।
गवां शतसहस्राणि बहूनि मिथिलेश्वरः॥ ४॥

कम्बलानां च मुख्यानां क्षौमकोट्यम्बराणि च।
हस्त्यश्वरथपादातं दिव्यरूपं स्वलंकृतम्॥ ५॥

ददौ कन्यापिता तासां दासीदासमनुत्तमम्।
हिरण्यस्य सुवर्णस्य मुक्तानां विद्रुमस्य च॥ ६॥

ददौ परमसंहृष्टः कन्याधनमनुत्तमम्।
दत्त्वा बहुधनं राजा समनुज्ञाप्य पार्थिवम्॥ ७॥

प्रविवेश स्वनिलयं मिथिलां मिथिलेश्वरः।
राजाप्ययोध्याधिपतिः सह पुत्रैर्महात्मभिः॥ ८॥

ऋषीन्सर्वान्पुरस्कृत्य जगाम सबलानुगः।
गच्छन्तं तं नरव्याघ्रं सर्षिसंघं सराघवम्॥ ९॥

घोराः स्म पक्षिणो वाचो व्याहरन्ति ततस्ततः।
भौमाश्चैव मृगाः सर्वे गच्छन्ति स्म प्रदक्षिणम्॥

तान्दृष्ट्वा राजशार्दूलो वसिष्ठं पर्यपृच्छत ।
असौम्याः पक्षिणो घोरा मृगाश्चापि प्रदक्षिणाः ॥

किमिदं हृदयोत्कम्पि मनो मम विषीदति ।
राज्ञो दशरथस्यैतच्छ्रुत्वा वाक्यं महानृषिः ॥

उवाच मधुरां वाणीं श्रूयतामस्य यत्फलम् ।
उपस्थितं भयं घोरं दिव्यं पक्षिमुखाच्च्युतम् ॥

मृगाः प्रशमयन्त्येते संतापस्त्यज्यतामयम् ।
तेषां संवदतां तत्र वायुः प्रादुर्बभूव ह ॥ १४ ॥

कम्पयन्मेदिनीं सर्वां पातयंश्च महाद्रुमान् ।
तमसा संवृतः सूर्यः सर्वा न प्रबभुर्दिशः ॥ १५ ॥

भस्मना चावृतं सर्वं संमूढमिव तद्बलम् ।
वसिष्ठश्चर्षयश्चान्ये राजा च ससुतस्तदा ॥ १६ ॥

ससंज्ञा इव तत्रासन्सर्वमन्यद्विचेतनम् ।
तस्मिंस्तमसि घोरे तु भस्मच्छन्नेव सा चमूः ॥

ददर्श भीमसंकाशं जटामण्डलधारिणम् ।
भार्गवं जामदग्न्यं तं राजराजविमर्दिनम् ॥ १८ ॥

कैलासमिव दुर्धर्षं कालाग्निमिव दुःसहम् ।
ज्वलन्तमिव तेजोभिर्दुर्निरीक्ष्यं पृथग्जनैः ॥१९॥

स्कन्धे चासाद्य परशुं धनुर्विद्युद्गणोपमम् ।
प्रगृह्य शरमुख्यं च त्रिपुरघ्नं यथा शिवम् ॥२०॥

तं दृष्ट्वा भीमसंकाशं ज्वलन्तमिव पावकम् ।
वसिष्ठप्रमुखाः सर्वे जपहोमपरायणाः ॥ २१ ॥

संगता मुनयः सर्वे संजजल्पुरथो मिथः ।
कच्चित्पितृवधामर्षी क्षत्रं नोत्सादयिष्यति ॥ २२ ॥

पूर्वं क्षत्रवधं कृत्वा गतमन्युर्गतज्वरः ।
क्षत्रस्योत्सादनं भूयो न खल्वस्य चिकीर्षितम् ॥

एवमुक्त्वार्घ्यमादाय भार्गवं भीमदर्शनम् ।
ऋषयो राम रामेति वचो मधुरमब्रुवन् ॥ २४ ॥

प्रतिगृह्य तु तां पूजामृषिदत्तां प्रतापवान् ।
रामं दाशरथिं रामो जामदग्न्योऽभ्यभाषत ॥

इति चतुःसप्ततितमः सर्गः ॥

## पञ्चसप्ततितमः सर्गः ॥

राम दाशरथे राम वीर्यं ते श्रूयतेऽद्भुतम् ।
धनुषो भेदनं चैव निखिलेन मया श्रुतम् ॥ १ ॥

तदद्भुतमचिन्त्यं च भेदनं धनुषस्त्वया ।
तच्छ्रुत्वाहमनुप्राप्तो धनुर्गृह्यापरं शुभम् ॥ २ ॥

तदिदं घोरसंकाशं जामदग्न्यं महद्धनुः ।
पूरयस्व शरेणैव स्वबलं दर्शयस्व च ॥ ३ ॥

तदहं ते बलं दृष्ट्वा धनुषोऽस्य प्रपूरणे ।
द्वन्द्वयुद्धं प्रदास्यामि वीर्यश्लाघ्यमहं तव ॥ ४ ॥

तस्य तद्वचनं श्रुत्वा राजा दशरथस्तदा ।
विषण्णवदनो दीनः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ५ ॥

क्षत्ररोषात्प्रशान्तस्त्वं ब्राह्मणश्च महायशाः ।
बालानां मम पुत्राणामभयं दातुमर्हसि ॥ ६ ॥

भार्गवाणां कुले जातः स्वाध्यायव्रतशालिनाम् ।
सहस्राक्षे प्रतिज्ञाय शस्त्रं निक्षिप्तवानसि ॥ ७ ॥

स त्वं धर्मपरो भूत्वा काश्यपाय वसुंधराम् ।
दत्त्वा वनमुपागम्य महेन्द्रकृतकेतनः ॥ ८ ॥

मम सर्वविनाशाय संप्राप्तस्त्वं महामुने ।
न चैकस्मिन्हते रामे सर्वे जीवामहे वयम् ॥ ९ ॥

ब्रुवत्येवं दशरथे जामदग्न्यः प्रतापवान् ।
अनादृत्यैव तद्वाक्यं राममेवाभ्यभाषत ॥ १० ॥

इमे द्वे धनुषी श्रेष्ठे दिव्ये लोकाभिविश्रुते ।
दृढे बलवती मुख्ये सुकृते विश्वकर्मणा ॥ ११ ॥

अतिसृष्टं सुरैरेकं त्र्यम्बकाय युयुत्सवे ।
त्रिपुरघ्नं नरश्रेष्ठ भग्नं काकुत्स्थ यत्त्वया ॥ १२ ॥

इदं द्वितीयं दुर्धर्षं विष्णोर्दत्तं सुरोत्तमैः ।
तदिदं वैष्णवं राम धनुः परपुरंजयम् ॥ १३ ॥

समानसारं काकुत्स्थ रौद्रेण धनुषा त्विदम् ।
तदा तु देवताः सर्वाः पृच्छन्ति स्म पितामहम् ॥

शितिकण्ठस्य विष्णोश्च बलाबलनिरीक्षया ।
अभिप्रायं तु विज्ञाय देवतानां पितामहः ॥

विरोधे जनयामास तयोः सत्यवतां वरः ।
विरोधं च महद्युद्धमभवद्रोमहर्षणम् ॥ १६ ॥

शितिकण्ठस्य विष्णोश्च परस्परजयैषिणोः ।
तदा तु जृम्भितं शैवं धनुर्भीमपराक्रमम् ॥

हुंकारेण महादेवः स्तम्भितोऽथ त्रिलोचनः ।
देवैस्तदा समागम्य सर्षिसंघैः सचारणैः ॥

याचितौ प्रशमं तत्र जग्मतुस्तौ सुरोत्तमौ ।
जृम्भितं तद्धनुर्दृष्ट्वा शैवं विष्णुपराक्रमैः ॥ १९ ॥

अधिकं मेनिरे विष्णुं देवाः सर्षिगणास्तदा ।
धनू रुद्रस्तु संक्रुद्धो विदेहेषु महायशाः ॥ २० ॥

देवरातस्य राजर्षेर्ददौ हस्ते ससायकम् ।
इदं च वैष्णवं राम धनुः परपुरंजयम् ॥ २१ ॥

ऋचीके भार्गवे प्रादाद्विष्णुः सन्न्यासमुत्तमम् ।
ऋचीकस्तु महातेजाः पुत्रस्याप्रतिकर्मणः ॥

पितुर्मम ददौ दिव्यं जमदग्नेर्महात्मनः ।
न्यस्तशस्त्रे पितरि मे तपोबलसमन्विते ॥ २२ ॥

अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः ।
वधमप्रतिरूपं तु पितुः श्रुत्वा सुदारुणम् ॥

क्षत्रमुत्सादयन्रोषाज्जातं जातमनेकशः ।
पृथिवीं चाखिलां प्राप्य काश्यपाय महात्मने ॥

यज्ञस्यान्ते तदा राम दक्षिणां पुण्यकर्मणे ।
दत्त्वा महेन्द्रनिलयस्तपोबलसमन्वितः ॥ २६ ॥

स्थितोऽस्मि तस्मिंस्तप्यन्वै सुसुखं सुरसेविते ।
अद्य तूत्तमवीर्येण त्वया राम महाबल ॥ २७ ॥

श्रुत्वा तु धनुषो भेदं ततोऽहं द्रुतमागतः ।
तदिदं वैष्णवं राम पितृपैतामहं महत् ॥ २८ ॥

क्षत्रधर्मं पुरस्कृत्य गृह्णीष्व धनुरुत्तमम् ।
योजयस्व धनुःश्रेष्ठे शरं परपुरंजयम् ।
यदि शक्नोषि काकुत्स्थ द्वन्द्वं दास्यामि ते ततः ॥

इति पञ्चसप्ततितमः सर्गः ॥

---

## षट्सप्ततितमः सर्गः ॥

श्रुत्वा तज्जामदग्न्यस्य वाक्यं दाशरथिस्तदा ।
गौरवाद्यन्त्रितकथः पितू राममथाब्रवीत् ॥ १ ॥

श्रुतवानस्मि यत्कर्म कृतवानसि भार्गव ।
अनुरुध्यामहे ब्रह्मन्पितुरानृण्यमास्थितः ॥ २ ॥

वीर्यहीनमिवाशक्तं क्षत्रधर्मेण भार्गव ।
अवजानासि मे तेजः पश्य मेऽद्य पराक्रमम् ॥

इत्युक्त्वा राघवः क्रुद्धो भार्गवस्य शरासनम् ।
शरं च प्रतिजग्राह हस्ताल्लघुपराक्रमः ॥ ४ ॥

आरोप्य स धनू रामः शरं सज्यं चकार ह ।
जामदग्न्यं ततो रामं रामः क्रुद्धोऽब्रवीदिदम् ॥

ब्राह्मणोऽसीति मे पूज्यो विश्वामित्रकृतेन च ।
तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥

इमां वा त्वद्गतिं राम तपोबलसमार्जितान् ।
लोकानप्रतिमान्वा ते हनिष्यामि यदिच्छसि ॥

न ह्ययं वैष्णवो दिव्यः शरः परपुरंजयः ।
मोघः पतति वीर्येण बलदर्पविनाशनः ॥ ८ ॥

वरायुधधरं रामं द्रष्टुं सर्षिगणाः सुराः ।
पितामहं पुरस्कृत्य समेतास्तत्र सर्वशः ॥ ९ ॥

गन्धर्वाप्सरसश्चैव सिद्धचारणकिंनराः ।
यक्षराक्षसनागाश्च तद्द्रष्टुं महदद्भुतम् ॥ १० ॥

जडीकृते तदा लोके रामे वरधनुर्धरे ।
निर्वीर्यो जामदग्न्योऽथ रामो राममुदैक्षत ॥

तेजोभिहतवीर्यत्वाज्जामदग्न्यो जडीकृतः ।
रामं कमलपत्राक्षं मन्दं मन्दमुवाच ह ॥ १२ ॥

काश्यपाय मया दत्ता यदा पूर्वं वसुंधरा ।
विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥

सोऽहं गुरुवचः कुर्वन्पृथिव्यां न वसे निशाम् ।
तदा प्रतिज्ञा काकुत्स्थ कृता मे काश्यपस्य हि ॥

तदिमां त्वं गतिं वीर हन्तुं नार्हसि राघव ।
मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥

लोकास्त्वप्रतिमा राम निर्जितास्तपसा मया ।
जहि ताञ्शरमुख्येण मा भूत्कालस्य पर्ययः ॥

अक्षयं मधुहन्तारं जानामि त्वां सुरोत्तमम् ।
धनुषोऽस्य परामर्शात्स्वस्ति तेऽस्तु परंतप ॥

एते सुरगणाः सर्वे निरीक्षन्ते समागताः ।
त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ॥ १८ ॥

न चेयं मम काकुत्स्थ व्रीडा भवितुमर्हति ।
त्वया त्रैलोक्यनाथेन यदहं विमुखीकृतः ॥

शरमप्रतिमं राम मोक्तुमर्हसि सुव्रत ।
शरमोक्षे गमिष्यामि महेन्द्रं पर्वतोत्तमम् ॥

तथा ब्रुवति रामे तु जामदग्न्ये प्रतापवान् ।
रामो दाशरथिः श्रीमांश्चिक्षेप शरमुत्तमम् ॥

स हतान्दृश्य रामेण स्वाँल्लोकांस्तपसार्जितान् ।
जामदग्न्यो जगामाशु महेन्द्रं पर्वतोत्तमम् ॥

ततो वितिमिराः सर्वा दिशश्चोपदिशस्तथा ।
सुराः सर्षिगणा रामं प्रशशंसुरुदायुधम् ॥ २१ ॥

रामं दाशरथिं रामो जामदग्न्यः प्रशस्य च ।
ततः प्रदक्षिणं कृत्वा जगामात्मगतिं प्रभुः ॥२४॥

इति षट्सप्ततितमः सर्गः ॥

## सप्तसप्ततितमः सर्गः ॥

गते रामे प्रशान्तात्मा रामो दाशरथिर्धनुः ।
वरुणायाप्रमेयाय ददौ हस्ते ससायकम् ॥ १ ॥

अभिवाद्य ततो रामो वसिष्ठप्रमुखानृषीन् ।
पितरं विह्वलं दृष्ट्वा प्रोवाच रघुनन्दनः ॥ २ ॥

जामदग्न्यो गतो रामः प्रयातु चतुरङ्गिणी ।
अयोध्याभिमुखी सेना त्वया नाथेन पालिता ॥

रामस्य वचनं श्रुत्वा राजा दशरथः सुतम् ।
बाहुभ्यां संपरिष्वज्य मूर्ध्नि चाघ्राय राघवम् ॥

गतो राम इति श्रुत्वा हृष्टः प्रमुदितो नृपः ।
पुनर्जातं तदा मेने पुत्रमात्मानमेव च ॥ ५ ॥

चोदयामास तां सेनां जगामाशु ततः पुरीम् ।
पताकाध्वजिनीं रम्यां जयोद्घुष्टनिनादिताम् ॥

सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ।
राजप्रवेशसुमुखैः पौरैर्मङ्गलवादिभिः ॥ ७ ॥

संपूर्णां प्राविशद्राजा जनौघैः समलंकृताम् ।
पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ८ ॥

पुत्रैरनुगतः श्रीमाञ्श्रीमद्भिश्च महायशाः ।
प्रविवेश गृहं राजा हिमवत्सदृशं प्रियम् ॥ ९ ॥

ननन्द सजनो राजा गृहे कामैः सुपूजितः ।
कौसल्या च सुमित्रा च कैकेयी च सुमध्यमा ॥

वधूप्रतिग्रहे युक्ता याश्चान्या राजयोषितः ।
ततः सीतां महाभागामूर्मिलां च यशस्विनीम् ॥

कुशध्वजसुते चोभे जगृहुर्नृपपत्नयः ।
मङ्गलालेपनैश्चैव शोभिताः क्षौमवाससः ॥ १२ ॥

देवतायतनान्याशु सर्वास्ताः प्रत्यपूजयन् ।
अभिवाद्याभिवाद्यांश्च सर्वा राजसुतास्तदा ॥

रेमिरे मुदिताः सर्वा भर्तृभिः सहिता रहः।
कृतदाराः कृतास्त्राश्च सधनाः ससुहृज्जनाः॥

शुश्रूषमाणाः पितरं वर्तयन्ति नरर्षभाः।
कस्यचित्त्वथ कालस्य राजा दशरथः सुतम्॥

भरतं केकयीपुत्रमब्रवीद्रघुनन्दनः।
अयं केकयराजस्य पुत्रो वसति पुत्रक॥ १६॥

त्वां नेतुमागतो वीर युधाजिन्मातुलस्तव।
श्रुत्वा दशरथस्यैतद्भरतः केकयीसुतः॥ १७॥

गमनायाभिचक्राम शत्रुघ्नसहितस्तदा।
आपृच्छ्य पितरं शूरो रामं चाक्लिष्टकारिणम्॥

मातृश्चापि नरश्रेष्ठः शत्रुघ्नसहितो ययौ।
गते च भरते रामो लक्ष्मणश्च महाबलः॥

पितरं देवसंकाशं पूजयामासतुस्तदा।
पितुराज्ञां पुरस्कृत्य पौरकार्याणि सर्वशः॥

चकार रामो धर्मात्मा प्रियाणि च हितानि च।
मातृभ्यो मातृकार्याणि रामः परमयन्त्रितः॥

गुरूणां गुरुकार्याणि काले काले चकार ह ।
एवं दशरथः प्रीतो ब्राह्मणा नैगमास्तदा ॥ २२ ॥

रामस्य शीलवृत्तेन सर्वे विषयवासिनः ।
तेषामतियशा लोके रामः सत्यपराक्रमः ॥ २३ ॥

स्वयंभूरिव भूतानां बभूव गुणवत्तरः ।
रामस्तु सीतया सार्धं विजहार बहूनृतून् ॥

प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
मनस्वी तद्गतमना नित्यं हृदि समर्पितः ॥

गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत ।
तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ।
अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥

तस्य भूयो विशेषेण
मैथिली जनकात्मजा ।
देवताभिः समा रूपे
सीता श्रीरिव रूपिणी ॥ २७ ॥

तया स राजर्षिसुतोऽभिरामया
समेयिवानुत्तमराजकन्यया ।
अतीव रामः शुशुभेऽतिकामया
विभुः श्रिया विष्णुरिवामरेश्वरः ॥ २८ ॥

इति सप्तसप्ततितमः सर्गः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये
चतुर्विंशतिसहस्रिकायां संहितायां

बालकाण्डः समाप्तः ॥



॥ श्रीः ॥

# ॥ श्रीमद्रामायणपारायणसमापनक्रमः ॥



## स्मार्तसंप्रदायः ।

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्यायेन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥

अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः ।
अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥

शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणात्मने ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ८ ॥

यन्मङ्गलं सुपर्णस्य विनताकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ९ ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ १० ॥

त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ ११ ॥

ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ १२ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥ १३ ॥

## श्रीवैष्णवसंप्रदायः ।

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ ३ ॥

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८ ॥

पितृभक्ताय सततं भ्रातृभिः सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९ ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १० ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११ ॥

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२ ॥

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥

मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥

## माध्वसंप्रदायः ।

स्वस्ति प्रजाभ्यः परिपालयन्तां
न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ३ ॥

मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत्सकलं परस्मै
नारायणायेति समर्पयामि ॥ ५ ॥